# नियमाः

१– अजस्रानाम्नीयं त्रैमासिकी संस्कृतपत्रिका मकर–मेष–कर्क– तुला–सङ्क्रान्तिषु (जनवरी–अप्रैल–जुलाई–अक्तूबरमासेषु) प्रकाशिता भवति।

२– अस्याः पत्रिकाया उद्देश्यं संस्कृतसम्पदां संरक्षणम्, विभिन्नपद्धतिजुषां रचनानां संवर्धनम्, प्रातिभनूतनकृतीनां संसर्जनञ्च।

३– समालोचनाभिलाषुकैः प्रकाशकैर्लेखकैर्वा नवीनकृतीनां द्वयी प्रेषणीया।

४– पत्रिकायामस्यां कवितालेखकथानाटकादीनि शोधनिबन्धाश्च स्थानं प्राप्स्यन्ति।

५– प्रकाशनाय प्रेषिताः सर्वविधा रचना एकस्मिन् पत्रपृष्ठे सुस्पष्टाक्षरै–र्लिखिताः टङ्किता वा स्युः।

६– कृतीनां प्रकाशनस्य सम्पादनस्य च सर्वाधिकारः सम्पादके संरक्षितोऽस्ति।

७– अस्वीकृता लेखाः टिकटसहितपत्रपुटके लब्धे सति लेखकेभ्यः प्रत्यावर्तिष्यन्ते।

संस्कृत-त्रैमासिकी यू.जी.सी. केयर–लिस्टेड ISSN-२२७८–३७४१

# अजस्रा

जनवरी २०२३–अक्टूबर २०२३ अङ्काः १–४ वर्षः –४७

सम्पादकः

प्रो० प्रयागनारायणमिश्रः




**अखिल–भारतीय–संस्कृत–परिषद्**

देववाणी–भवनम्, अलीगञ्जम्,

लखनऊ–२२६०२४

**शुल्कम्**

| | | |
|---|---|---|
| वार्षिकम् | ५००.०० | रूप्यकाणि |
| एकस्याऽङ्कस्य | १२५.०० | रूप्यकाणि |
| आजीवनम् | ५१००.०० | रूप्यकाणि |
| संयुक्ताङ्कस्याऽस्य | ५००.०० | रूप्यकाणि |



---

अखिल भारतीय संस्कृत–परिषद्, देववाणी–भवनम्, अलीगञ्ज, लखनऊ की ओर से मन्त्री, अखिल भारतीय संस्कृत परिषद् द्वारा प्रकाशित और प्रो० प्रयागनारायण मिश्र द्वारा सम्पादित तथा श्री मनीष मेहता द्वारा प्नार आफसेट, 17 अशोक मार्ग, हजरतगञ्ज, लखनऊ से मुद्रित।

## अनुक्रमः

# सम्पादकीयम्

अखिलभारतीयसंस्कृतपरिषदिति नामधेया लक्ष्मणपुरस्था लब्धप्रतिष्ठेयं संस्था देववाणीभाषायाः प्रचुरप्रसारार्थं त्रैमासिकीमेकाम् अजस्रा–नाम्नीं शोधपत्रिकामजस्ररूपेण प्रतिवर्षं प्रकाशयति इत्यस्ति विषयः खलु प्रमोदस्य, यतोहि कस्याश्चिदपि संस्कृतशोधपत्रिकायाः नियतं नियतकालिकञ्च प्रकाशनं खलु दुष्करं कार्यम्। विगतवर्षे वर्षद्वयानन्तरं हि बहुविघ्नान्यपाकृत्य 'आचार्यद्वयस्मृतिविशेषाङ्क–रूपेण परिषदाऽनया अजस्रायाः वर्षद्वयात्मकः संयुक्ताङ्कः प्राकाशि नवदेहलीस्थ–केन्द्रीयसंस्कृतविश्वविद्यालयस्य आर्थिकसहयोगेन। सम्प्रति निरन्तरमेवाङ्कोऽयम–जस्रायाः संस्कृतानुरागिसहृदयानां परमौदार्येण झटित्येव शोधपत्रप्रदानेन प्रकाश्यते।

गीर्वाणवाण्याः प्रसार इदानीं लोके नितरां प्रकाशते परन्तु न केवलं संस्कृतभाषायाः प्रचार–प्रसारसरणिः समाजेऽपेक्षिता वर्तते, अपितु संस्कृतभाषामाध्यमेन यद्यच्छास्त्रीया सम्पदस्माकीना वर्तते तस्याः सम्यक् समुन्मेषो विद्वद्भिः संस्कृतसंस्थाभिश्च करणीय इत्यस्ति महती खल्वावश्यकता संस्कृतस्य संरक्षणाय शास्त्रज्ञानस्य सम्यक् प्रसाराय च। अस्मिन् सन्दर्भे शोधपत्रिकाणमप्रतिमं समवदानमपेक्षितमङ्गीक्रियते। एतदर्थमेव केन्द्रीयसंस्कृतविश्वविद्यालयस्य पत्रिका–प्रकाशनानुदान–योजना संस्कृतपत्रपत्रिकाणामजस्रप्रकाशनार्थं कृतसङ्कल्पा दरीदृश्यते। अत एव अखिलभारतीयसंस्कृतपरिषदियं गभीराणां शास्त्रीयशोधपत्राणां प्रकाशनं विधाय संस्कृतेन सार्द्धं प्राचीनानां शास्त्ररक्षणरम्पराणां रक्षां कारं कारमजस्रं प्रवाहयति देववाणी–देवापगासलिलं पूततमम् अजस्रा–रूपेण। अजस्रायाः संयुक्ताङ्केऽस्मिन् यैर्विद्वद्भिः शोधचिकीर्षुभिश्च शोधपत्राणि सम्प्रेष्याऽनुग्रहः कृतः तेभ्यस्सर्वेभ्यः कार्तज्ञ्यं विनिवेद्य आशास्यते यदेषोऽङ्कोऽजस्रायाः लोकसंस्कृतेर्डिण्डिमघोषं विधास्यत्यथ च पत्रिकायां श्रैष्ठ्याधानमधिकृत्य विद्वांसोऽस्मन्मार्गनिर्देशनं विधास्यन्त्यवश्यम्।

**इति शम्**

**शरत्–पूर्णिमा** **–प्रो० प्रयागनारायणमिश्रः**
**संवत् २०८०** **(सम्पादकः)**

# शुक्लयजुर्वेदस्य लोकोपकारकत्वम्

**प्रो. शत्रुघ्नपाणिग्राही**

*वेदविभागः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयः,*

*पुरी, उड़ीसा*

**प्रस्तावना–**

''ईष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः''[१] इति आचार्यसायणस्य वचसा ब्रह्मनिरूपणेऽलौकिकमुपायप्रतिपादन एव वा प्राधान्येन वेदानां तात्पर्ये सत्यपि **''वेदोऽखिलो धर्ममूलम्''**[२] **''धर्मजिज्ञासमानानां प्रमाण परमं श्रुतिः''**[३] ''स **सर्वोऽभिहितो वेदे''**[४] इत्यादिभि र्मनुवचनैर्वेदाना धर्मप्रतिपादकत्वमपि सिध्यति। धर्मप्रधानो वेदः। वेदोऽखिलधर्ममूलम् इति मनोर्वचः सर्वप्रकारकस्य लौकिकालौकिकधर्मस्य वेदमूलकत्वं संसाधयति। धर्मे जगतः प्रतिष्ठा भवति। 'यागादिरेव धर्मः इति मीमांसावचनं श्रूयते। स एव यागो लोकोपकाराय प्रवर्तते। यज्ञकर्मणि देवानामावाहनं भवति। ते देवाः विश्वस्य पालने महत्त्वपूर्णभूमिकां निर्वहन्ति। वैज्ञानिकदृष्ट्या यज्ञकर्मणि अग्निना सह द्रव्याणां संयोगमेव सृष्टिरचनाकार्यमित्युच्यते। ब्रह्माण्डस्योद्गमस्थलं यज्ञो वर्तते।[५] यज्ञकर्मसम्पादनेन सम्पूर्णं जगत् नियन्त्रितं भवति।[६] सम्पूर्णजगतः सत्ता अस्मिन्यज्ञे निहिता, सृष्टेः, अन्ते अयं यज्ञ एव अवशिष्यत इति ब्राह्मणवचनम्।[७] अतः शुक्लयजुर्वेदे प्रथमाध्यायत आरभ्य ऊनचत्वारिंशाध्यायं यावत् केवलं

---

१. ऋग्वेदभाष्यभूमिका–सायणभाष्यम्

२. मनुस्मृतिः–२/६

३. तत्रैव–२/१३

४. तत्रैव– २/७

५. यज्ञः बभूव भुवनस्य गर्भः। (तैत्तिरीयब्राह्मणम्– २/४/७/५)

६. यज्ञो वै विश्वरूपाणि यज्ञमेवैतेन सम्भरति। (जैमिनीयब्राह्मणम्–१/७४)

७. यज्ञ एव अन्ततः प्रतितिष्ठति। (तदेव–१/८/१/२)

वैदिकयागानां विषये चर्च्चा श्रूयते। लोकोपकारदृष्ट्या वैदिकयागानां महत्त्वपूर्णभूमिका वर्त्तते।

## वैदिकयज्ञानां लोकोपकारकत्वम्

श्रौतयागानां प्रकल्पना वैज्ञानिके आधारे वर्तते। अतो वैदिकयागानाम् आधिदैविकजगता सह साक्षात् सम्बन्धोऽस्ति। अग्निहोत्रस्य अहोरात्रेण सह, दर्शपूर्णमासयोः कृष्णपक्षशुक्लपक्षाभ्यां सह, चातुर्मास्यानां त्रिभिः ऋतुभिः सह। एतदर्थं यागप्राधान्येनजुर्वेदस्य महत्त्वपूर्णं स्थानं विद्यते। किमर्थमित्युक्ते यदा यज्ञे प्रदत्ताहुतिभिः अग्निशिखाः निर्मीयन्ते, घृतादिद्रव्याणि वायुरूपेण उपरि गच्छन्ति तदा तस्य सूक्ष्मकणाः तडित्शक्तियुक्ता भवन्ति। आकाशे स्थितानां धूलिकणानां धूमकणानाञ्च संयोगेन या तडित्शक्तिः सञ्चिता भवति तेन मेघानां सृष्टिर्भवति। यस्मात् कारणात्सृष्टिप्रक्रिया प्रचलति। अतो विश्वस्य यन् मौलिकं तत्त्वं विद्यते येन अस्य विश्वस्य सृष्टिः स्थितिः भवति तदेव यज्ञशब्देन आख्यायते। यज्ञकर्मणि देवानामावहनं भवतिं ते देवाः विश्वस्य पालने महत्त्वूर्णभूमिकां निर्वहन्ति। वैज्ञानिकदृष्ट्या यज्ञकर्मणि अग्निना सह द्रव्याणां संयोगमेव सृष्टिरचनाकार्यमित्युच्यते। ब्रह्माण्डस्योद्गमस्थलं यज्ञो वर्तते।[८] यज्ञकर्मसम्पादनेन सम्पूर्णजगत् नियन्त्रितं भवति।[९] सम्पूर्णजगतः सत्ता अस्मिन्यज्ञे निहिता, सृष्टेरन्ते अयं यज्ञ एव अवशिष्यत इति ब्राह्मणवचनम्।[१०] अतः सृष्टिरक्षणार्थं विश्वस्य पालनार्थं च यज्ञस्यावश्यकता वर्तते। यज्ञसम्पादनार्थं यजुर्वेदस्यावश्यकता वर्तते। एतदेव शुक्लयजुर्वेदस्य महत्त्वपूर्णं लोकोपकारकत्वं वर्तते।

## रोगनिवारणदृष्ट्या शुक्लयजुर्वेदस्य लोकोपकारकत्वम्

सन्धिसमये यागः कर्तव्य इति। यतोहि रोगाणामुत्पत्तिः सन्धिकाल एव भवति। अपि च मनसि विकारभावनाः सन्धिकाल एव आगच्छन्ति। अस्मिन् समये यज्ञसम्पादनेन परमात्मना सह मनसः सम्बन्धो जायते। सन्धिसमये यागसम्पादनेन गवां घृतं अग्निसंयोगेनागत्य वातावरणं शुद्धं करोतिं यागे अयं

---

८. यज्ञः बभूव भुवनस्य गर्भः। (तैत्तिरीयब्राह्मणम्– २/४/७/५

९. यज्ञो वै विश्वरूपाणि यज्ञमेवैतेन सम्भरति। जैमिनीयब्राह्मणम्– १/७४

१०. यज्ञ एवं अन्ततः प्रतितिष्ठति। (तैत्तिरीयब्राह्मणम्– १/८/१/२)

अग्निः पावक–शुचि–पवमानादिपदैः सम्बोध्यते। अस्य नाम श्रवणेनैव ज्ञायते यद् अग्निः शोधनयुक्ता वर्तते।[११] यागस्य समीपे यानि रोगोत्पत्तिकारणानि जीवाणूदयरूपाणि भवन्ति तेषां नाशो भवति येन शकासात् यजमानः तथा तस्य गृहे तिष्ठन्तः जनाः रोगरहिता भूत्वा सुखेन तिष्ठन्ति। यज्ञो रोगानां भेषजरूपो वर्तते। अतः कौषीतकिब्राह्मणे श्रूयते– भेषज्ययज्ञा वा एते यच्चातुर्मास्यानि। तस्मादृतुसन्धिषु प्रयुज्यन्ते। ऋतुसन्धिषु हि व्याधिर्जायते।[१२] अतः कात्यायनेनोक्तम्– **ऋतुमुखे यजेत्.....।**[१३]

शरीरविज्ञानदृष्ट्या वेदेषु मानवशरीरसंश्रितानामनेकेषां व्याधीनामुल्लेखो वर्तते। शीर्षशोफः, कपालविकारः, पलितम्, नेत्ररोगः, यक्ष्मा, दन्तविकारः मुखपाकादयः, बलासरोगः (क्षयः), कासः, सर्पविषं चेति प्रमुखा' व्याधयः तथा एतेषां निराकरणोपाया अपि वर्णिताः सन्ति।[१४] अतः सर्वविधरोगनिवारणविधानं शुक्लयजुर्वेदस्य लोकोपकारकत्वं वर्तते।

## लौकिकव्यवहारदृष्ट्या शुक्लयजुर्वेदस्य लोकोपकारकत्वम्

यथा वेदे तथा लोके इति न्यायेन यागसम्पादनसमये हविः प्रोक्षणकर्म फलिकरण– वेदिपरिस्तरणादिकर्मणि ये वैदिकनियमाः दृश्यन्ते ते नियमाः अपि मानवैः लौकिकव्यवहाररूपेण स्वकीयजीवने परिपाल्यन्ते। अध्वर्युः प्रागग्रैरुदगग्रैश्च कुशैः आहवनीयगार्हपत्यदक्षिणाग्नीं क्रमेण परितः तृणाति। इदं परिस्तरणं देवानामुपवेशनार्थं भवति। लौकिकव्यवहारदृष्ट्याऽपि आतिथ्यप्रदाने एतद् अस्माभिः अवधातव्यमस्ति। पुनश्च हविः प्रोक्षणवत् अस्मांक भोजनपात्राण्यपि मार्जनीयानि इति लौकिकव्यवहारशिक्षा शुक्लयजुर्वेदे मिलति।

## संस्कारकर्मणि शुक्लयजुर्वेदस्य लोकोपकारकत्वम्–

यज्ञकर्मसम्पादनार्थं यजमानस्य कृते व्रतग्रहणस्य विधानं वर्तते। व्रतं

---

११. ऋग्वेदः– १/१२/२

१२. कौषीतकिब्राह्मणम्– ५/२

१३. कात्यायानश्रौतसूत्रम्–प्रथमोऽध्यायः

१४. यजुर्वेदः– १२/१०

नाम भोजनम्। यदि भुञ्जीत तर्हि तद् व्रतोपायनीयमेवेति। दृष्टप्रयोजनमिदं भोजनम्। अतश्च ''व्रतोपायनीयमश्नीत'' इति नियमविधिः। सायं फलानि अश्नीयात्। सत्यवदनादिरूपव्रतग्रहणम्। आहवनीयस्य पश्चाद्भागे तिष्ठन् उदकं स्पृष्ट्वा **अग्ने व्रतपते**[१५]...... इत्यादिना मन्त्रेण व्रतं नियमं सपत्नीकयजमानो गृह्णीयात्। यज्ञसम्पादनावसरे यजमानः सङ्कल्पं नयति यद् अद्यादारभ्य अहं सत्यं वदामि, मिथ्याभाषणं न करोमि। तत्रैव सपत्नीको यजमानः गार्हपत्यागारे ब्रह्मचर्यधारणपूर्वकं भूमौ शयनं करोति। अनेन प्रकारेण तपश्चरणं विधाय यजमानः सपत्नीकः संस्कारयुक्तो भवति। अतः श्रूयते अथर्ववेदे— **धर्मावसानः तपसोदतिष्ठत्।**[१६] अपि च पत्न्याः कटिप्रदेशे मेखलाबन्धनेन तस्याः संस्कारो जायते, येन सा आज्यावेक्षणं कर्तुं शक्नोति।

### सांसारिकसम्बन्धदृष्ट्या शुक्लयजुर्वेदस्य लोकोपकारकत्वम्—

वैदिकसंस्कृतौ विशेषतो यज्ञकर्मणि जायायाः उपस्थितिः अपरिहार्या वर्तते। तत्र पत्या सह पत्न्याः सहभागिता सर्वत्र दृश्यते। यागे अपां प्रणयनम् उत्तरस्यां दिशि भवति। अत्र अग्निः भवति पुरुषः, आपो भवति स्त्री। शतपथब्राह्मणे श्रूयते— **योषा वा आपः वृषाग्निः, गृहा वै गार्हपत्य... मिथुनमवैत्प्रजननं क्रियते।**[१७] लोकेऽपि पत्युः उत्तरस्यां दिशि पत्न्याः स्थानं भवति। गार्हस्थधर्मस्य सम्पादनमपि गृहेष्वेव भवतिं अत्र लौकिकं सांसारिकं सम्बन्धं प्रदर्शयति शुल्कयजुर्वेदीय अपां प्रणयनं नाम विधिः।

### आध्यात्मिकचिन्तनक्षेत्रे शुक्लयजुर्वेदस्य लोकोपकारकत्वम्—

पूर्णमासयागे हविग्रहणप्रसङ्गे यजमानः अग्निहोत्रहवणिं शूर्पं च गृहीत्वा शकटस्य समीपं गच्छति। तत्र शकटारोहणसमये कथयति शकटारोहणं स्वयं विष्णुदेवः करोति न तु अहम्। श्रूयते यथा—**विष्णुस्त्वाक्रमताम्**[१८] इति। पुनश्च शकटारोहणानन्तरं हविग्रहणसमयेऽपि कथयति सवितादेवस्य प्रेरणया,

---

१५. शुक्लयजुर्वेदः—१/५

१६. अथर्ववेदः— ११/५/५

१७. शतपथब्राह्मणम्— १/१/१/१८—२०

१८. शुक्लयजुर्वेदः— १/६

अश्विनकुमारयोः बाहुभ्यां, पूषादेवस्य हस्ताभ्यां हविग्रहणं करोमि। श्रूयते यथा–

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।**[१९] अस्य मन्त्रस्यानुशीलनेन ज्ञायते यद्यपि यजमानः स्वयं हविनिर्वापकर्म सम्पादयति तथापि सर्वस्य लोकस्य प्रेरयिता सवितादेवस्य प्रेरणया हविर्गृह्णातीति कथयति। **''यज्ञो वै विष्णुः''**[२०] इति शतपथब्राह्मणस्य वचनम्। यज्ञशब्देन विष्णुः ज्ञायते। **यज्ञो यजमानस्य**[२१] इति निरुक्तवचनानुसारम् अचेतनभूतदेवस्य यज्ञस्य कार्यं चेतनरूपजीवपुरुषः सम्पादयति। अतो यागसम्पादनसमये यजमानः स्वकीयमवस्थितिं विस्मृत्य देवैः सहाध्यात्मिकसम्बन्धं स्थापयति। एतदेव शुक्लयजुर्वेदस्य लोकोपकारकत्वम्।

अश्वमेधयागकर्मणि उद्गात्रा चत्वार आध्यात्मिकप्रश्नाः पृष्टाः तेषाम् उत्तराणि ददाति ब्रह्मा। अस्य भुवनस्य नाभिं कारणमहं जानामि परब्रह्मैव जगत्कारणं जानामीत्यर्थः। द्यावापृथिवी अन्तरिक्षं च ब्रह्मणो विकारभूतमिति जानामि। बृहतः सूर्यस्योत्पत्तिकारणं ब्रह्मैव जानामि। अपि च परमात्मनो जातं चन्द्रमसमहं वेद्मि।[२२] यजमानः अध्वर्युं प्रति प्रश्नं करोति यथा– ''यजमानोऽध्वर्युं पृच्छामि त्वेति''।[२३] पृथिव्याः परमन्तमवधिभूतं पर्यन्तं त्वामहं पृच्छामि। किमस्ति भुवनस्य नाभिः तदपि त्वां पृच्छामि। किमस्ति अश्वस्य वीर्यं त्वां पृच्छामि। किमस्ति वाण्याः परममुत्कृष्टं स्थानं त्वां पृच्छामि।[२४] अध्वर्युः यजमानं प्रत्याह।[२५]

---

१९. शुक्लयजुर्वेदः–१/१०

२०. शतपथब्राह्मणम् १/१/१/१३

२१. निरुक्तम्–७/२

२२. वेदाहमस्य भुवनस्य नाभिं वेद द्यावापृथिवी अन्तरिक्षम्।
वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसं यतोजाः।। (शुक्लयजुर्वेदः– २२/६०)

२३. कात्यायनश्रौतसूत्रम् २०/७/१४

२४. पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम।।
(शुक्लयजुर्वेदः– २३/६१)

२५. इयं वेदीरित्यध्वर्युः– (कात्यायनश्रौतसूत्रम्– २०/७/१५)

इयं वेदिः उत्तरवेदिः पृथिव्याः परः अन्तोऽवधिः। यदा पृथिव्यादयो लोका निस्सृताः तदानीं पृथिवी सलिलमयी आसीत्। तस्यास्तत्स्वरूपादारभ्य पृथिव्याः पृष्ठे यदाग्नेः प्रादुर्भावः समजनि तावति महति काले पृथिव्यां विविधानि परिवर्तनान्यभूवन्। अतः पृथिव्या वेदैश्च साम्यं स्वयं श्रुतिर्दशयति— **''इयं वेदिः परो अन्तः पृथिव्याः''। अयं यज्ञोऽश्वमेधः भुवनस्य प्राणिजातस्य नाभिः। श्रूयते यथा— यज्ञाद्वै प्रजाः प्रजायन्ते। स वै यज्ञ एव प्रजापतिः,** [२६] **पशवो हि यज्ञः।**[२७]

एतद्विहाय शुक्लयजुर्वेदे अनेके उपयोगिनो लोकोपकारकविषयाः स्थाने—स्थाने निर्दिष्टाः सन्ति। नैतिकतायाः जागरणे महत्त्वपूर्णं स्थानं निर्वहति शुक्लयजुर्वेदः। सत्यस्य पालनं, मैत्रीभावः, सुमधुरव्यवहारः, त्यागमयजीवनं, अहिंसापूर्णजीवनम्, उपासनापूर्वकं प्रकृतेः भोगः इत्यादीनि नानाविधानि उपकारकाणि वचांसि शुक्लयजुर्वेदे प्राप्यन्ते यथा **''तन्मे मनः शिवसङ्कल्पमस्तु''**[२८], **''मित्रस्य चक्षुषा समीक्षामहे''**[२९], **भद्रं कर्णेभिः शृणुयाम देवाः**[३०], **माता भूमिः पुत्रोऽहं पृथिव्याः**[३१], **सत्यं वद, धर्मं चर, अतिथिदेवो भव**[३२], **तेनत्यक्तेन भुञ्जीथाः मा गृधः कस्य स्विद्धनम्**[३३], **यस्मिन् सर्वाणि भूतानात्मन्नेवानुपश्येति**[३४], **इदमहमनृतात् सत्यमुपैमि**[३५]। **अग्नौ मित्रेभ्यश्च अदत्वा स्वयमेव भुङ्क्ते यः सः केवलादी केवलाघो भवति**[३६]। **सह**

---

२६. कौषीतकिब्राह्मणम्— १०/१, १३/१, २५/११
२७. शतपथब्राह्मणम्— ३/१/४/६/, ३/२/३/११
२८. शुक्लयजुर्वेदः ३४/१/६
२९ यजुर्वेदः ३६/१८
३०. यजुर्वेदः २५/२१
३१. अथर्ववेदः १२/१/१२
३२. तैत्तिरीयोपनिषद् शिक्षावल्ली।
३३. ईशावास्योपनिषद्—१
३४. ईशावास्योपनिषद्—१
३५. शुक्लयजुर्वेदः— १/५
३६. मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य।
नार्यमणं पुष्यति नो सखायं कवेलाघो भवति केवलादी।। (ऋग्वेदः— १०/११७/६)

**नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै** इति कठोपनिषद्वाक्यं परस्परसहावस्थानपूर्वकं मैत्रीभावस्य अभिवृद्धिद्वारा विद्वेषभावनारहितताया स्वकीयबलवीर्यादि– वर्द्धयितुमुपदिशति। यदि एते गुणाः स्वीक्रियन्ते चेत् तर्हि आतङ्कस्य उत्पत्तिर्नैव भविष्यति। एतानि सन्ति शुक्लयजुर्वेदस्य लोकोपकारकाणि तत्त्वानि।

निष्कर्षरूपेण वक्तुं शक्यते यद् भारतवर्षं धर्मनिरपेक्षराष्ट्रं, वैदिकसाहित्यं हिन्दूनां धर्मग्रन्थ इति वा मात्वा स्वार्थान्वेषिराजनेतारः पाठ्यक्रमात् वैदिकग्रन्थान् निष्कासितवन्तः। परन्तु ते न जानन्ति जगतो लोकोपकाराय एव वेदानामाविर्भावः। अतो 'वेदाः सर्वहितार्थाय' इति वचनं मनसि निधाय मनुना उक्तम– **'वेदमेव सदाभ्यस्येत'**[३७] इति शम्।

***

३७. मनुस्मृतिः २/१६६

# अष्टाध्याय्यां पदसञ्ज्ञाविचारः

**डॉ० प्रीतिलक्ष्मी स्वाईं**

*सहाध्यापिका, संस्कृतविभागः, भाषा–भवनम्,*

*विश्वभारती, शान्तिनिकेतनम्, वीरभूम्, पश्चिमवङ्गः*

**प्रबन्धसारः**

भाषाश्रृङ्खलात्मकं ज्ञानं भवति व्याकरणम्। संस्कृतव्याकरणग्रन्थस्य 'अष्टाध्यायी' इत्यस्य रचयिता महामुनिपाणिनिरासीत्। तस्य अष्टाध्यायी सर्वोत्कृष्टं सुविन्यस्तं सर्वजनादृतञ्च सर्वोपरि अतीव प्रमाणयोग्यमेव। सूत्रशैल्या रचितग्रन्थोऽयं संस्कृतव्याकरणशास्त्रस्य प्राणस्तम्भस्वरूपः। जगति मानवानां दैनन्दिनजीवने परस्परमनोगतभावानामादानप्रदानाय भाषाया आवश्यकता वर्तते। भाषायां विद्यमानेषु प्रमुखसौष्ठवेषु वाक्यम् अन्यतमम्। बहूनां पदानां संयोगेन वाक्यमेकं भवति। तर्हि पदस्य भूमिका अनिवार्यम्। पदमित्युक्ते पद्यते गम्यते अर्थः अनेनेति पदम्। अत्र पद् धातुः दिवादिः आत्मनेपदी च गतौ इत्यर्थः। अखिलेऽस्मिन् प्रपञ्चेऽपरम् अर्थव्यक्ताय लघुमाध्यमरूपेण पदमेव व्यवहरन्ति जनाः। पाणिनीयव्याकरणे पदसंज्ञाविधायकानि चत्वारि सूत्राणि सन्ति। तानि यथा– सुप्तिङन्तं पदम् (१.४.१४), नः क्ये (१.४.१५), सिति च (१.४.१६), स्वादिष्वसर्वनामस्थाने (१.४.१७) चेति। प्रबन्धेऽस्मिन् अष्टाध्यायीदिशा पदसंज्ञाविषयिणीव्यापकचर्चा क्रियते।

**उपोद्घातः**

मनोगतभावप्रकाशनाय भाषा अपरिहार्या। भाषा संरक्षणार्थं व्याकरणम् अवश्यम्भावी। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा येनेति व्याकरणम्। येन शास्त्रेण शब्दस्य सम्यक्तया विश्लेषणं क्रियते तद्भवति व्याकरणम्। शब्दस्यार्थं सुष्ठुरूपेण परिज्ञानाय व्याकरणज्ञानस्य आवश्यकता वर्तते। अर्थः शब्दज्ञाप्यः शब्दं विना ज्ञातुमशक्यः। दण्डिना काव्यादर्शे यथार्थमुक्तम्–

**"इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।"**[१]

अर्थात् यदि समग्रसंसारे शब्दस्वरूपज्योतिः प्रज्वलितो न स्यात्तर्हि अखिलब्रह्माण्डः तमसाछन्नो भविष्यति। अतः शब्दतत्त्वस्य प्राधान्यं परिलक्ष्यते। व्याकरणशास्त्रं विना शब्दतत्त्वावबोधो न भवति। अर्थप्रवृत्तितत्त्वानां शब्दा एव कारणं भवन्ति। आचार्यभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे सुष्ठुरूपेण प्रतिपादितम्–

**"अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।।"**[२]

संस्कृतभाषायाः व्यवहारं श्रृङ्खलाबद्धस्वरूपकर्तृं चतुर्दशमाहेश्वर–सूत्राणामुपरि भगवता पाणिनिना अष्टाध्यायीग्रन्थो विरचितः। यतः शब्दानां वर्णानाञ्च सूक्ष्मातिसूक्ष्मस्वरूपेण कथनार्थं विविधाः संज्ञाः निर्दिष्टाः, ततः ताः सुप्रसिद्धाः। एतासु पदसंज्ञा अन्यतमा वर्तते। अष्टाध्याय्यां सुप्तिङन्तं पदम् (१.४.१४) इत्यारभ्य स्वादिष्वसर्वनामस्थाने (१.४.१७) पर्यन्तं इयं संज्ञा एतैः चतुर्भिः सूत्रैः प्रदर्शिता। एतानि सूत्राणि विस्तरेण व्याख्यातव्यानि–

**सुप्तिङन्तं पदम्**[३]

सुप्तिङन्तं पदम् (१.४.१४) इति प्रथमं सूत्रमिदम्। अनेन सूत्रेण सुबन्तं तिङन्तं च पदसंज्ञं भवति। सुप् च तिङ् च सुप्तिङौ, इत्यत्र इतरेतरद्वन्द्वसमासः चार्थे द्वन्द्वः (२.२.२९) इत्यनेन सूत्रेण। तौ अन्ते यस्य तत् सुप्तिङन्तं शब्दस्वरूपमिति इति विग्रहे अनेकमन्यपदार्थे (२.२.२४) इति सूत्रेण बहुव्रीहिसमासः। द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते न्यायेन अन्तशब्दस्य प्रत्येकं (सुपा तिङा च) सह सम्बध्यते। फलतः सूत्रार्थो भवति सुबन्ततिङन्तयोः पदसंज्ञा स्यात्। न केवलं धातुप्रातिपदिकयोः। यद्यत्र अन्तशब्दस्य ग्रहणं न स्यात्, तर्हि सुप्तिङ् पदम् इति भविष्यति। तदा केवलं सुप्प्रत्ययस्य तिङ्प्रत्ययस्य च पदसंज्ञा। परन्तु

---

१. काव्यादर्शः १/४

२. वाक्यपदीयम् ब्र. का. १३

३. अष्टाध्यायी १/४/१४

तदनिष्ठम्। अतः सूत्रेऽस्मिन् अन्तशब्दस्य ग्रहणं कृतम्। पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेदार्थम् इति महाभाष्ये। अस्यार्थो भवति अन्यत्र संज्ञाविधौ प्रत्ययग्रहणेन तदन्तविधिर्न कर्तव्यम् इति ज्ञापकार्थं क्रियते। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति। फलतः तरप्तमपौ घः (१.१.२२) इति तरप्तमबन्तस्य घसंज्ञा न भवति। केवलं तरप्–तमप्प्रत्यययोः सूत्रेणोक्ता घसंज्ञा भवति। उपर्युक्तसुत्रे सुपा तिङा च प्रत्याहारं बुध्यते। अत्र सुप् इत्यनेन प्रत्याहारेण स्वादिसुबन्ता एकविंशतिः प्रत्यया गृह्यन्ते, ते यथा– सु, औ, जस्, अम्, औट्, शस्, टा, भ्याम्, भिस्, ङे, भ्याम्, भ्यस्, ङसि, भ्याम्, भ्यस्, ङस्, ओस्, आम्, ङि, ओस्, सुप् चेति। तिङ् इत्यनेन अष्टादशलादेशाः तिबादिप्रत्यया गृह्यन्ते। ते भवन्ति– तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इड्, वहि, महिङ्चेति। उदाहरणं यथा– राम + सु – रामः, पठ् + तिप्–पठति। अत्र रामशब्दस्य व्युत्पत्तिपक्षे कृत्तद्धितसमासाश्च (१.२.४६) सूत्रेण अथवा अव्युत्पत्तिपक्षे अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१.२.४५) इति सूत्रेण प्रातिपदिकसंज्ञा। प्रातिपदिकात्[1] ततः परं प्रथमैकवचने सुप्रत्ययेन राम इति रूपम् निष्पद्यते। रामः इत्यस्य सुबन्तत्वात् प्रकृतसूत्रेण पदत्वं प्राप्नोति। एवमेव पठति इत्यादिषु तिङन्तत्वात् पदत्वं लभते। अत्र शङ्का जायते यत् प्रस्तुतसूत्रे सुबित्यनेन प्रत्याहारं न गृहीत्वा सप्तमीबहुवचनस्य ग्रहणेन का क्षतिः। न ङिसम्बुद्धयोः[2] (८.२.८) इति प्रतिषेधादनर्थकः इति। सुपो ग्रहणेन ङिसम्बुद्धयोः नलोपस्य प्राप्तिरेव नास्ति पदत्वाभावात्। बालमनोरमायां कथितं– "सुबिति स्वौजसमौडिति सूत्रे 'सु' इत्यारभ्य सुपः पकारेण प्रत्याहारो न तु सप्तमीबहुवचनस्यैवाऽत्र ग्रहणं, व्याख्यानात्"। पदसञ्ज्ञानन्तरं ससजुषो

---

१. प्रत्ययः (३/१/१), परश्च (३/१/२), ङ्याप्प्रातिपदिकात् (४/१/१) इति त्रिभिः अधिकारसूत्रैः प्रातिपदिकात्परं अधिकारे पाठिताः प्रत्ययाः भवन्ति।

२. नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। (सिद्धान्तकौमुदी, प्र.भागः, मोतिलाल बना., पृ. ३६०)। अत्र न लोपः प्रातिपदिकान्तस्य (८/२/१६) सूत्रेण प्रातिपदिकसञ्ज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् (सि.कौ., प्र.भागः, मोतिलाल बना., पृ. २३७) परन्तु अयं लोपः ङिप्रत्यये परे सम्बोधनैकवचनस्य सुप्रत्यये च परे न भवति उपर्युक्तसूत्रेण।

रुः (८.२.६६) इति सूत्रेण रुत्वं तथा खरवसानयोर्विसर्जनीयः (६.३.१५) इत्यनेन विसर्जनीयत्वं, एवं तिङ्ङतिङः (८.१२८) इति सूत्रेण निघातस्वरः चेत्यादीनां विधानं जायते। अपिच सूत्रस्यास्य बृहदेकं प्रयोजनं वर्तते लोके शब्दानां साधुत्वसम्पादनम्। भाष्यकारेण सुष्ठु कथितं यत्– 'अपदं न प्रयुञ्जीत' इति। अपरिनिष्ठितं न प्रयोक्तव्यमित्यर्थः।

अपि च अव्ययानामपि प्रातिपदिकत्वम्, सुबुत्पत्तिः पदसंज्ञा च भवति। अष्टाध्याय्यां स्वरादिनिपातमव्ययम् (१.१.३७) इत्यतः अव्ययीभावश्च (१.१.४१) इति यावत्सु पञ्चसु सूत्रेषु[१] अव्ययसंज्ञा विधीयते। सर्वाणि अव्ययानि मूलतः प्रातिपदिकानि भवन्ति अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१.२.४५) इति सूत्रेण। उदाहरणं यथा– च। प्रातिपदिकात्परं स्वरादिनिपातमव्ययम् (१.१.३७) इत्यनेन अव्ययसंज्ञा, स्वौजसमौट्......(४.१.२) इत्यनेन सुबुत्पत्तिः, अव्ययादाप्सुपः (२.४.८२) इत्यनेन अव्ययाद्विहितस्य सुपः लुक् विधानं भवति। पुनः प्रत्ययलोपे प्रत्ययलक्षणम् (१.१.६२) इत्यनेन प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं सुप्तिङन्तं पदम् (१.४.१४) इति पदसंज्ञा स्यात्। एवमेव पदसंज्ञाप्राप्ता एव अस्य पदस्य वाक्ये प्रयोगो भवति। अतः 'सीता राधा च' इत्यत्र विद्यमानः 'च' इति पदसंज्ञकः।

### नः क्ये (१.४.१५)[२]

सूत्रेऽस्मिन् पदद्वयं विराजते। नः इति प्रथमैकवचनान्तं पदम्, नकारादकार उच्चारणार्थः। एवं क्ये इति सप्तम्येकवचनान्तं पदम्। सुबिति पदमिति च पदद्वयं पूर्वसूत्राद् अनुवर्तते। तदन्तविधिना[३] सुबित्यनेन सुबन्तस्य ग्रहणम्। तच्च नकारेण विशिष्यते। अत्र न इत्यनेन नान्तमिति गृह्यते। तेन सूत्रार्थः स्यात् क्ये परतः नान्तं सुबन्तं पदसंज्ञं जायते नान्यत्। सूत्रे क्य

---

३. स्वरादिनिपातमव्ययम् (१/१/३७), तद्धितश्चासर्वविभक्तिः (१/१/३८), कृन्मेजन्तः (१/१/३६), क्त्वातोसुन्कसुनः (१/१/४०) अव्ययीभावश्च (१/१/४१)।

२. अष्टाध्यायी १/४/१८

४. प्रत्ययग्रहणेन तदन्तग्रहणमिति। येन विधिस्तदन्तस्य (१/१/७२)– विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य। (सि.कौ., प्र.भागः, मोतिलाल बना., पृ.३५)

इत्यनेन क्यच् क्यङ् चेति प्रत्यययोः ग्रहणं भवति न तु क्यषः हलन्तात् क्यषः असम्भवात् लोहितादिड। ज्भ्यः क्यष् (३.१.१३) इति नियमेन[1]।

क्यचि परतः उदाहरणं यथा—राजीयति। आत्मनो राजानमिच्छति इत्यत्र राजन् अम् इति सुबन्तात् सुप आत्मनः क्यच् (३.१.८) इत्यनेन क्यच् प्रत्ययः, सनाद्यन्ता धातवः (३.१.३२) इति धातुसंज्ञा, सुपो धातुप्रातिपदिकयोः (२.४.७१) इत्यनेन धातोः अवयवरूपेण विद्यमानस्य सुप्रत्ययस्य लुक् स्यात्, अनुबन्धलोपे राजन् य इति स्थिते क्यचि परे[2] नकारान्तराजन् इत्यस्य प्रस्तुतसूत्रेण पदसंज्ञात्वात् नलोपः प्रातिपदिकान्तस्य (८.२.७) इति सूत्रेण राजन् इत्यस्य नकारलोपे राज य इति जाते, क्यचि च (७.४.३३) इति अकारस्य ईत्त्वे राजीय इति जाते तस्य लटि प्रथमपुरुषस्य एकवचने राजीयति इति प्रयोगः सिद्ध्यति। अत्र ईत्त्वर्थं नकारलोपो न असिद्धः नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति (८.२.२) सूत्रेण[3]।

क्यङि परतः उदाहरणं यथा— राजायते इति। राजा इव आचरति इत्यत्र कर्तुः क्यङ् सलोपश्च (३.१.११) इत्यनेन सूत्रेण इव आचरति इत्यस्मिन् अर्थे सुबन्तेभ्यः क्यङ् प्रत्ययो भवतीति राजन् क्यङ्। क्यङ् इति सनादिप्रत्ययत्वात् सनाद्यन्ता धातवः (३.१३.३२) इत्यनेन धातुसंज्ञा, सुपो धातुप्रातिपदिकयोः (२.४.७१) इत्यनेन धातोः अवयवरूपेण विद्यमानस्य सुप्रत्ययस्य लुक् स्यात्, अनुबन्धलोपे राजन् य इति स्थिते क्यङि परे नकारान्तराजन् इत्यस्य प्रस्तुतसूत्रेण पदसंज्ञाविधानत्वात् न लोपः प्रातिपदिकान्तस्य (८.२.७) इति सूत्रेण राजन् इत्यस्य नकारलोपे राज य इति जाते, अकृत्सार्वधातुकयोर्दीर्घः (७.४.२५) इति दीर्घे जाते राजाय जायते। ततः लटि तिपि राजायते इति रूपं भवति।

अत्र क्यचि क्यङि च परतः सुपः लुक् इति जाते नकारान्तशब्दः स्वयमेव

---

१. लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्। (सि.कौ., तृ.भागः,मोतिलाल बना., पृ. ५२५)

२. प्रत्ययलोपो प्रत्ययलक्षणम् (१/१/६२)— प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात्। (सि.कौ., प्र.भागः, मोतिलाल बना., पृ. २५८)

३. सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः, नान्यत्र राजाश्वः इत्यादौ। (सि.कौ., प्र.भागः, मोतिलाल बना., पृ. ३६३)

प्रत्ययलक्षणेन सुप्तिङन्तं पदम् (१.४.१४) इति सूत्रेण पदसंज्ञं प्राप्नोति। पुनः अनेन सूत्रेण पदसञ्ज्ञाविधानस्य आवश्यकता भवति 'सिद्धे सत्यारम्भो नियमार्थः'। अर्थात् यदि किमपि कार्यसिद्धिमनन्तरमपि तद्विधीयते तदा नियमार्थाय इति बुध्यते। अस्यार्थः क्यचि क्यङि परतः नकारान्तशब्दमेव पदसंज्ञं स्याद् नान्यशब्दः। सूत्रमिदं नियमसूत्रम्। फलतो न लोपः प्रातिपदिकान्तस्य (८.२.७) इति सूत्रेण नलोपविधानम्।

## सिति च[1]

सूत्रेऽस्मिन् पदद्वयं विद्यते। सिति इति सप्तम्येकवचनान्तं पदं, चेति अव्ययपदम्। सिति इत्युक्ते सकारः इत् यस्येति बहुव्रीहिसमासे सिद् भवति, तस्मिन् सिति इति। सूत्रार्थो भवति सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात्। अनया पदसंज्ञया पुरस्तादपवादन्यायेन[1] भसंज्ञा बाधते। उदाहरणानि तावत्– अहंयुः, शुभंयुः चेत्यादीनि। अहम् (अहंकारः) अस्त्यस्येति अहंयुः (घमण्डी)। अत्र अहम् इति विभक्तिप्रतिरूपकादव्ययाद् अहंशुभमोर्युस् (५.२.१४०) अनेन सूत्रेण युस् प्रत्ययः, अनुबन्धसकारस्य लोपे अहम् यु इति जाते यचिभम् (१.४.१८) सूत्रेण प्राप्तः पूर्वस्य भसंज्ञां बाधित्वा सिति च (१.४.१६) सूत्रेण पदसंज्ञा विधीयते। पदसंज्ञाविधानात् अहम् इत्यस्य पदान्तमकारस्य मोऽनुस्वारः (८.३.२३) सूत्रेण अनुस्वारः एवं वा पदान्तस्य (८.४.५६) इत्यनेन अनुस्वारस्य वैकल्पिक परसवर्णे अहँय्युः अहंयुः चेति वैकल्पिकरूपद्वयं भवति। एवमेव शुभम् (कल्याणम्) अस्त्यस्येति शुभंयुः (कल्याणकारी)। शुभम् अप्यत्र मकारान्तविभक्तिप्रति–रूपकादव्ययाद् अहंशुभमोर्युस् (५.२.१४०) सूत्रेण युस् प्रत्ययः, अनुबन्धसकारस्य लोपे सिति च (१.४.१६) सूत्रेण पदसंज्ञा तथा पूर्ववत् अनुस्वारः एवं वैकल्पिकपरसवर्णे शुभँय्युः शुभयुः चेति वैकल्पिकरूपद्वयं वर्तते।। युस् प्रत्ययस्य सित्करणस्य प्रयोजनं भवति सिति च (१.४.१६) सूत्रेण पूर्वस्य पदसंज्ञाविधानं, तत्परे पदसंज्ञामूलकं अनुस्वारः एवं वैकल्पिकपरसवर्णम्। अष्टाध्याय्यां पञ्च सित्प्रत्ययाः सन्ति। ते यथा–युस्,

---

१. अष्टाध्यायी १/४/१६

२. पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् इति न्यायः। पूर्वपठिता अपवादा अव्यवहितानेवोत्तरान् विधीन् बाधन्ते, न तु व्यवहितानित्यर्थः।

यस्, छस्,णस् घस् च। एते सर्वे तद्धितसंज्ञकाः।

### स्वादिष्वसर्वनामस्थाने[1]

पदसंज्ञाविषयकमिदम् अन्तिमं सूत्रम्। अस्मिन् सूत्रे पदद्वयं स्वादिषु इति सप्तमीबहुवचनान्तं पदं, असर्वनामस्थाने इति सप्तम्येकवचनान्तं पदम्। स्वादिषु इति सुप्रत्यय आदिर्येषान्ते स्वादयः[2], तेषु स्वादिषु इति बहुव्रीहिसमासः। तथाहि न सर्वनामस्थाने, असर्वनामस्थाने इति नञ्समासः। असर्वनामस्थाने इति स्वादिषु इत्यस्य विशेषणम्। अत्र एकवचनम् आर्षप्रयोगः। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्। अत्र स्वादिषु इति सप्तम्यन्तत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्य (१.१.६६) परिभाषया पूर्वशब्दसमुदायस्य पदसंज्ञा भवति। अर्थात् सर्वनामस्थानभिन्नेषु स्वादिषु प्रत्ययेषु परेषु पूर्वशब्दसमुदायस्य पदसंज्ञा विधीयते। तर्हि सर्वनामस्थानसंज्ञकाः प्रत्यया इत्युक्ते सुडनपुंसकस्य[3] (१.१.४३), शि सर्वनामस्थानम् (१.१.४२) च इत्याभ्यां सूत्राभ्यां विहिताः प्रत्ययाः सर्वनामस्थानसंज्ञां प्राप्नुवन्ति। एतान् विहाय अवशिष्टेषु प्रत्ययेषु परेषु पूर्वस्य पदसंज्ञा भवति। पयोभ्याम्, पयोभिः, राजभ्याम्, राजभिः चेत्यादीन्युहोदाहरणानि। तथाहि पयस्प्रातिपदिकात्भ्याम् पयस् भ्याम् इति स्थिते भ्यामः कप्प्रत्ययावधित्वात् स्वादित्वात् असर्वनामस्थानत्वात् तस्मिन् परे पूर्वस्य पयस् इत्यस्य प्रस्तुतसूत्रेण पदत्वात् पदान्ते विद्यमानस्य सकारस्य ससजुषो रुः(८.२.६६) इति रुत्वम् जाते (पयरु भ्याम्) हशि च (६.१.११४) इत्यनेन रु इत्यस्य उत्वम् (पयउ भ्याम्), ततः आद्गुणः (६.१.८७) इति गुणैकादेशे पयोभ्याम् इति रूपं सिद्धम्।

### पदसञ्ज्ञायाः प्रयोजनानि

पदसंज्ञा संस्कृतव्याकरणे अत्यन्तं महत्त्वपूर्णम्। तां विना बहूनि

---

१. अष्टाध्यायी १/४/१७

२. चतुर्थाध्यायस्य प्रथमपादे स्वौजस्मौट्........(४/१/२) इत्यस्मिन् सूत्रे सुप्रत्ययादारभ्य पञ्चमाध्यायस्य चतुर्थपादस्य परिसमाप्तिपर्यन्तम् सर्वे प्रत्ययाः स्वादिप्रत्ययाः इति ज्ञायन्ते। एते प्रातिपदिकेभ्यः विधीयन्ते।

३. स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य। (ल.सि.कौ., अजन्त पु.)

व्याकरणप्रक्रियाकार्याणि न भविष्यन्ति। तानि निम्नतया प्रोक्तानि–

- अनुस्वारादेशप्रसङ्गे मान्तस्य पदस्यानुस्वारः स्याद्धलि मोऽनुस्वारः (८.३.२३) इति सूत्रेण। उदाहरणं तावत् हरिं वन्द इति। अत्र हरिम् वन्दे इति स्थिते सुप्तिङन्तं पदम् (१.४.१४) इति सूत्रेण पदान्तत्वात् मस्यानुस्वारः। परंतु गम्यत इत्यत्र मस्य पदान्तत्वाभावान्नानुस्वारः।
- परसवर्णप्रसङ्गे पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् वा पदान्तस्य सूत्रेण(८.४.५९)। उदाहरणं यथा–त्वङ्करोषि। अत्र त्वम् करोषीति स्थिते, मोऽनुस्वारः (८.३.२३) इति सूत्रेण पदान्तत्वात् मस्यानुस्वार एवं वा पदान्तस्य सूत्रेण (८.४.५९) वैकल्पिकपरसवर्णोङ्कारः।
- विसर्गादेशप्रसङ्गे खरि अवसाने च परे पदान्तस्य रेफस्य विसर्गः स्यात् खरवसानयोर्विसर्जनीयः(८.३.१५) इति सूत्रेण। उदाहरणं यथा– रामः। अत्र राम सु–रामर्– इति पदान्तत्वात् रेफस्य विसर्गोऽवसाने परे ।
- रुत्वप्रसङ्गे पदान्तस्य सस्य 'सजुष्' शब्दस्य च अर्थात् सकारान्तं सजुष्शब्दान्तं च यत् पदं तस्य रुः स्यात् ससजुषो रुः (८.२.६६) इति सूत्रेण। उदाहरणं यथा– रामः, सजूः। अत्र राम सु–रामर्– इति पदान्तत्वात् सकारस्य रुत्वम्। अपिच सजुष् शब्दान्तं यत् पदं तदन्तस्य षकारस्य इत्यर्थः। सजुष् सु इत्यत्र हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् (६.१.६८) सूत्रेण सकारस्य लोपः। प्रत्ययलोपो प्रत्ययलक्षणम् (१.१.६२) इत्यनेन प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात्, अतः सुप्तिङन्तं पदम्म् (१.४.१४) इति सूत्रेण सजुष् शब्दस्य पदसंज्ञा भवति। प्रकृतसूत्रेण षकारस्य रुत्वे सजुर्– सजूः[१] इत्यत्र पदान्तरेफत्वात् उपधाभूतस्य उकारस्य दीर्घः। ततश्च सजुषौ सजुष इत्यत्र षकारस्य न रुत्वम्, पदान्तत्वाभावात्।

---

१. र्वोरुपधाया दीर्घ इकः (८/२/७६) – रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते। (सि.कौ., प्र.भागः, मोतिलाल बना., पृ. ४३६)

- जश्त्वविधानप्रसङ्गे पदान्ते झलां जशः स्युः झलां जशोऽन्ते (८.२.३६) इति सूत्रेण। उदाहरणं यथा–वागीशः, चिद्रूपम्। वाक् ईशः इत्यत्र वाक् इत्यस्य ककारस्य (झलां) पदान्तत्वात् जश्त्वं (गकारः) विधीयते। चिद्रूपम् (चित् रूपम्) इत्यत्र चित् इत्यस्य तकारस्य (झलां) पदान्तत्वात् जश्त्वं (दकारः) स्यात्।
- कुत्वविधानप्रसङ्गे चवर्गस्य कवर्गः स्याद् झलि पदान्ते च चोः कुः (८.२.३०) इति सूत्रेण। उदाहरणं यथा– सुयुक्, सुयुग्। अत्र सुयुज् इति पदान्ते चवर्गस्य कवर्गो जाते वाऽवसाने (८.४.५६) सूत्रेण वैकल्पिकचर्त्वम्।
- संयोगान्तस्य लोपप्रसङ्गे संयोगान्तं[1] यत्पदं तदन्तस्य लोपः स्यात् संयोगान्तस्य लोपः (८.२.२३) इति सूत्रेण। उदाहरणं यथा– अपठन्। अत्र पठ् धातोः लङ्लकारस्य प्रथमपुरुषबहुवचने पदान्ततकारस्य लोपः।
- नकारस्य लोपप्रसङ्गे प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् न लोपः प्रातिपदिकान्तस्य (८.२.७) इति सूत्रेण। उदाहरणं यथा– राजा, राजभ्याम्, राजभिः। राजन् भ्याम् इत्यत्र स्वादिष्वसर्वनामस्थाने (१.४.१४) इत्यनेन पदसंज्ञात्वात् उपर्युक्तसूत्रेण नकारस्य लोपे राजभ्याम् भवति।
- अनुनासिकप्रसङ्गे यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् यरोऽनुनासिकेऽनुनासिको वा (८.४.४५) इति सूत्रेण। उदाहरणं यथा– एतन्मुरारिः, एतद्मुरारिः। अत्र एतद् मुरारिरिति स्थिते दस्य अनुनासिको नकारः, दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च।
- पदसंज्ञाया एतानि प्रयोजनानि विहाय अपि बहूनि अन्यानि कार्याणि विद्यन्ते। तानि यथा– वैकल्पिकछत्वविधानं शश्छोऽटि (८.४.६३) सूत्रेण,

---

१. हलोऽनन्तराः संयोगः (१/१/७)– अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः। (सि. कौ., मोतिलाल बना., प्र.भागः, पृ. ४०)

वैकल्पिकतुग्विधानं शि तुक् (८.३.३१) सूत्रेण, नित्यङमुडागमविधानं ङमो ह्रस्वादचि ङमुण् नित्यम् (८.३.३२) सूत्रेण, दीर्घात्पदान्तात् वैकल्पिकतुग्विधानं पदान्ताद्वा (६.१.७६) सूत्रेण, यवयोर्वा लोपविधानं लोपः शाकल्यस्य (८.३.१९) सूत्रेण, पूर्वरूपमेकादेशविधानं एङः पदान्तादति (६.१.१०९) सूत्रेण, प्रकृतिभावविधानं सर्वत्र विभाषा गोः (६.१.१२२) सूत्रेण, वैकल्पिकम् अवङादेशविधानं अवङ् स्फोटायनस्य (६.१.१२३) सूत्रेण, उपधादीर्घविधानं र्वोरुपधाया दीर्घ इकः (८.२.७६) सूत्रेण इत्यादीनि।

**निष्कर्ष:**

अष्टाध्यायीषु विद्यमानेषु प्रमुखोपादानेषु संज्ञा सर्वश्रेष्ठा। एतासु विविधसंज्ञासु पदसंज्ञायाः स्थानं प्रभूतं गुरुत्वपूर्णमस्ति। शब्दसाधुत्वनिष्पादने व्याकरणप्रक्रियायां निर्दिष्टसूत्राणां प्रयोगे च अस्याः भूमिका विद्यते। यथा–अनूस्वारादेशः, परसवर्णः, विसर्गादेशः, जश्त्वविधानं, कुत्वविधानं, नलोपः, संयोगान्तलोपः, वैकल्पिकानुनासिकविधानं प्रभृतिषु विभिनन्नव्याकरणप्रक्रियाकार्येषु पदसञ्ज्ञायाः वैशिष्ट्यं स्पष्टमेवानुमीयते। अत एतेभ्यो बहुविधकार्येभ्यस्तामपेक्षन्ते।

***

# श्रीमद्भगवद्गीतोपदिष्टं कर्मदर्शनम्–दैनन्दिनव्यवहारेषु तत्प्रयोगः प्रभावश्च

**डॉ० प्रशान्तकर्मकारः**

*सहाध्यापकः, संस्कृतविभागः, स्यार्–रासबिहारी–घोष–महाविद्यालयः*

*उखरिद्, खण्डघोषः पूर्ववर्धमानः, पश्चिमवङ्गः*

भारतीया संस्कृतिः सगौरवं राजते जगति। आप्राचीनकालात् ज्ञानचर्चायां भारतीयाः सर्वान् अतिक्रमन्ति। गहनारण्येषु वैदिकर्षीणां पर्णकुटीरेषु अस्या ज्ञानचर्चयाः प्रारम्भो जातः। प्रायेण पञ्चदशशतप्रागीशवीयाब्देषु ऋक्संहितायाः सङ्कलनेन तन्निदर्शनं जगति प्रकाशमगात्। ततश्च अपराः संहिताः ब्राह्मणानि, आरण्यकानि, उपनिषदः, स्मृतिशास्त्राणि, धर्मशास्त्राणि, पुराणानि, रामायणं, महाभारतं, लौकिककाव्यानि, विज्ञानस्य शिल्पकलानां च विविधाः शाखाः प्रभृतयः क्रमशः प्राकशमयुः। भारतीयमनीषाया एवं वैचित्र्यं सुनर्दिष्टिं कारणमनुसरति। नासौ केवलं वस्तुजगन्निष्ठा अपितु आध्यात्मिकविषयाणामपि प्रख्यापयिका। ऐहिकपारलौकिकयोः उभयोरेव विषययोः चर्चितत्वाद् भारतीयमनीषाया गतिः दुर्वारा जाता। अध्यात्मविद्याया या चर्चा सैव जगति ''भारतीयदर्शनम्'' इति नाम्ना प्रसिद्धिमगात्। ''दर्शन''– शब्दस्य अभिधालभ्योऽर्थस्तावत् प्रेक्षणम्। परमिह भारतीयदर्शने तच्छब्दो विशेषमर्थं धत्ते। येन शास्त्रेण वस्तुनिष्ठजगदतिक्रम्य अध्यात्मतत्त्वं ज्ञातुं शक्यते, जन्ममरणचक्रमतिक्रम्यते, ब्रह्मसायुज्यञ्च लभ्यते तदेव शास्त्रं दर्शनपदाभिधेयम्। अध्यात्मतत्त्वालोचनायां विश्वसंसदि भारतं विशेषं स्थानमधिकरोति। मोक्ष एव अध्यात्मतत्त्वालोचनाया मुख्य आधारः। जन्ममृत्युचक्रान्मुक्तिरेव मोक्षः। ब्रह्मसायुज्यलाभेनैव तच्चक्रं निवर्तते। तदा किश्चत् सर्वेष्वात्मानम्, आत्मनि च सर्वान् अनुभवति। नासौ तदा दुःखेन संबध्यते। आनन्दमयो हि भवति जीवः। प्राणिनो हि जीवद्दशायां कर्मबन्धेन निगड़िताः स्युः, कर्मबन्धनानि वा विच्छिद्य मोक्षं प्रति प्रतिष्ठेयुः। अध्यात्मतत्त्वालोचनावसरे उभावेव विषयौ स्पष्टीकृतौ। तथापि मोक्षस्यैव तत्र

प्राधान्यात् जीवानां परमाकाङ्क्षितत्वात् कर्मबन्धनं छित्वा तल्लाभाय एवाधिको यत्नः परिलक्ष्यते तत्रालोचनायाम्। भारतीयानां प्रशस्या धीः एकमेव लक्ष्यं विभिन्नैः मार्गैः संसाधयति। अतएव भारते पल्लविता बहवः सम्प्रदायाः। सर्वे एव ते विविधैः मार्गैः एकमेव मोक्षमासादितवन्तः। तेषाञ्च मार्गाणां सम्यगवधारणेन साकल्येन चत्वारः पन्थानो ज्ञातुं शक्यन्ते। ते यथा– राजयोगो ज्ञानयोगः कर्मयोगो भक्तियोगश्च। जीवो हि तन्निहितगुणानुसारेण मार्गमेकमवलम्ब्य मोक्षाय यतेत। ''योगो'' हि कश्चित् पारिभाषिकः शब्दः। योगार्थकेन युज्धातुना करणे घञा योग–शब्दो निष्पन्नः। तस्माद् येन पुमान् परमपुरुषार्थेन युज्यते स योगः, युक्तश्च योगी इत्युच्यते। तत्र राजमार्गेण मोक्षेप्सुः जीवो राजयोगी, ज्ञानमार्गेण मोक्षार्थी ज्ञानयोगी, कर्ममार्गेण मोक्षकामी कर्मयोगी, भक्तिमार्गेण च मोक्षलाभार्थी भक्तियोगी उच्यते।

भारते पल्लवितेषु विविधेषु सम्प्रदायेषु एते उपाया चिरं बहुधा चर्चिताः। सम्प्रदायानां तेषां पारस्परिकं मतपार्थक्यं भारतीयदर्शनानि भूयः समृद्धानि कृतवन्तः। परमतखण्डनेन स्वमतमण्डनेन च एतानि दर्शनानि महीरुहत्वं प्राप्य सम्प्रदायरूपेण प्रकाशं लब्धवन्तः। भारतभूमिर्हि संहतिपूर्णा। अतएव परस्परविरोधिनामपि तेषां सम्प्रदायानां इह सहावस्थानमवलोक्यते। न केवलमेतदेव भारतीयसंस्कृतेः मूलाधाराद् एकस्मिन्नेव सृष्टे ग्रन्थे दरीदृश्यते समेषां तेषां परस्परविरुद्धमतानां ग्रन्थनम्। स हि ग्रन्थे भारतीयसंस्कृतेः संहतेश्च उत्कृष्टं निदर्शनम्। महर्षिणा व्यासेन रचितं महाभारतं हि तद्ग्रन्थः। महाभातरस्यादिपर्वणि महर्षिणा तस्मात् सगौरवमुद्घोषितं–

**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।। इति।**

तेन ऐहिकपारत्रिकयोरुभयोरेव वर्णनं महाभारते सुलभम्। अस्माच्च ऋषिवाक्यात् परस्परविरोधिमतानां युगपदवस्थानमत्र निश्चीयते। एतैः साकं तदानीन्तनीयभारतस्य इतिहासः, पुराणं, धर्मः दर्शनं नीतिज्ञानं, शासनम्, आख्यानम्, उपाख्यानं, राष्ट्रनीतिः, अर्थनीतिः, सामाजिकानां प्रात्यहिकव्यवहाराः, धर्मार्थकाममोक्षाणामभ्यासविधिः प्रभृतयो विषया अपि अत्र महाकाव्या प्रकीर्तिताः। एकतोऽस्मिन् वर्ण्यते विषयवासना तत्परिणामश्च,

अपरतश्चात्र उल्लिख्यते विषयवैराग्यं मोक्षश्च। क्वचिदुपलभ्यते लोभस्य, हिंसायाः, स्वार्थबृद्धेः, शाठ्यस्य, मिथ्याया, नयविरोधिकर्मणां च आख्यानं, क्वचिद्वा सम्प्राप्यते नयस्य, त्यागस्य, प्रीतेः, नीतेः, शान्तेश्च उपाख्यानम्। कस्याश्चिज्जातेः स्वरूपं ज्ञायते तदनुसृतसंस्कृत्या। सा च संस्कृतिः प्रतिफलिता भवति तस्या जातीयसाहित्येषु। एतन्मतानुसारेण महाभारतं हि भारतीयसभ्यतायाः संस्कृतेश्च आकरभूतम्। भारतीयसंस्कृतौ भोगं विहाय त्यागः प्रशस्यते। न हि पार्थिवविषयेषु आसक्तः सन् स्वरूपविस्मरणं पुंसः समर्थ्यते अत्र, अपि तु अज्ञानं परिच्छिद्य आत्मान्वेषणमेव अस्याः संस्कृतेः लक्ष्यम्। साहित्ये संस्कृतेः प्रतिविम्बनात् अस्मिन् महाकाव्येऽपि अन्ततो जयन्ते सत्यं, शान्तिः, नयः, त्यागश्च। विषयवासनां परित्यज्य आत्मतत्त्वानुसन्धानम् एव मुख्यतामवाप। तच्चात्मानुसन्धानं मार्गचतुष्टयैरेव सम्भाव्यते। एतेषां मार्गचतुष्टयानां प्रत्येकं आत्मसाक्षात्कारोपकारकत्वेनापि सांसारिकैः इतरेषामपेक्षया अनायासेनानुसरणसम्भवात् कर्मयोग एव अत्र प्रबन्धे मया वर्णनीयत्वेन स्वीक्रियते।

सम्पूर्णेऽस्मिन् महाभारते मोक्षविषयकं यावत्तत्त्वमुपलभ्यते श्रीमद्भगवद्गीता हि तत्र आकरभूतम्। अष्टादशपर्वात्मकस्य महाभारतस्य भीष्मपर्वणः त्रयोविंशतितमाध्यायप्रभृति चत्वारिंशत्तमाध्यायेषु पञ्चविंशतितमाध्यायप्रभृति द्विचत्वारिंशत्तमाध्यायेषु वा अनुस्यूतमाना अष्टादशाध्यायाः जगति श्रीमद्भगवद्गीतानाम्ना प्रसिद्धिमगात्। विषयगुरुत्वमवधार्य महाभारतान्तर्गतापि गीता पृथग्ग्रन्थत्वेन काव्यसंसदि प्रकाशमयात्। मोक्षाय यतमानानां परस्परविरोधिनां मतानि अत्र ग्रन्थे समन्वितानि दृश्यन्ते। सा चेयं गीता उपनिषच्छास्त्रं योगशास्त्रं वोच्यते। आत्मतत्त्वं, तल्लाभाय विविधा उपायाः, तेषाञ्च मतानां समन्वयस्तत्र समुपलभ्यन्ते। तथापि प्रबन्धसंज्ञां शिरसि निधाय कर्मयोगमात्रमत्र आलोच्यते अधः।

''कर्मणा योग'' इति व्युत्पत्या कर्मयोग इति पदनिष्पत्तेः तन्मार्गावबुद्धये ''कर्म'' तथा ''योग'' इत्युभयोरेव पदयोः पृथक्तया व्याख्यानमावश्यकम्।

कर्मपदेन सामान्येन हस्तपादादिना क्रियमाणा विविधाश्चेष्टा अवगम्यन्ते। अनेन व्याख्यानेन जीवैः आचरितानि सर्वाण्येव कार्याणि कर्मपदवाच्यानि। परन्तु तत्त्वालोचनायां न सर्वदा स्थूलार्थ एव स्वीक्रियते। विषयाणां सूक्ष्मालोचना एव दर्शनशास्त्राणामभिप्रायः। तेन च कर्म–पदमपि विशेषावधानमपेक्षते। गीता हि सकलशास्त्रार्थसारभूता। अतस्तत्र निरूपितं प्रकृतं कर्मस्वरूपम्। कुरुक्षेत्रे युयुत्सूनामन्तः स्थित्वा भगवता श्रीकृष्णेन गीतोपदिष्टा। विपक्षीयसैन्यदलेषु आत्मीयान् प्रेक्ष्य विमूढमर्जुनं क्षात्रधर्मोचितं स्वकर्तव्यं स्मारयितुं भगवता उपदिष्टेयं गीता तस्मै। एतेनैतन्निश्चप्रचं वक्तुं शक्यते यद्गीतामृते नान्यत्र कर्मतत्त्वं सम्यक् ख्यापितं स्यात्। कर्मस्वरूपं निरूपयता भगवता उक्तं तत्र– **''गहना कर्मणो गतिः''**[1] इति। कर्मतत्त्वं नूनमेव दुरूहमिति तावदेतदर्थः। जीवानां दैहिकचेष्टामात्रं न कर्म, न वा तादृशचेष्टानामभाव एवाकर्म। अत्र कारणं तावत् जीवानां चेष्टामात्रं तेषां बन्धनं जनयेत्। कर्मणा च पुनो मुक्तिरुपकल्पिता शास्त्रेषु। तेन कर्मदर्शनं साधारणतत्त्वतः सर्वथा भिन्नम्। गीतायां भगवता प्रोक्तं, यत् सामान्येन अकर्मत्वेन प्रतीयते प्रकृत्या तदेव कर्म। साधारणेषु दैहिकचेष्टानामभाव एवाकर्मत्वेन स्वीक्रियते। एवम्विधा चेष्टा दरीदृश्यते परब्रह्मणि। जीवेषु शारीरिकचेष्टानामभावो न कथमपि उपलभ्यते। जीवो यावज्जीवति तावत्तस्मिन् शारीरिकचेष्टा उपलभ्यन्ते। उक्तञ्च तत्र गीतायां– **''न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्''**[2] इति ब्रह्मो हि नित्य–मुक्त–बुद्धस्वभावात्मकत्वात् कूटस्थः, अविनाशी, सच्चेति ज्ञायते। पूर्णस्वभावत्वात् न ब्रह्मणि कापि चेष्टा सङ्गच्छते। अत तदेव प्रकृतं कर्म। सकलचेष्टाभावाद् उपनिषदादिशास्त्रेषु ब्रह्म ''कूटस्थ''– पदेन आख्यायते। ''कूट''– पदस्य ''राशिः'' अर्थः। राशिरिव अविचलित्वाद् ब्रह्म कूठस्थ उच्यते। गीतायामपि उक्तं– **''कूटस्थोऽक्षर उच्यते''**[3] इति। ब्रह्म एव प्रकृत्या कर्म। तद्गतमायया च सृष्टं जगदेव अकर्म। माया हि मिथ्या। तन्निर्मितं जगदपि

---

१. श्रीमद्भगवद्गीता, ४/१७

२. तदेव, ३/५

३. तदेव, १५/१६

मिथ्यैव। मिथ्यासम्भूतत्वाज् जगदिदमनित्यम्। साधारणा हि मायासम्भूतं जगदिदमेव सारभूंत मत्वा जागतिकसुखलाभाय विविधाश्चेष्टाः कुर्वन्ति। तस्मादेव साधारणेषु यत्कर्मत्वेन प्रतिभातं भवति तत्प्रकृत्या अकर्मैव। चलद्यानाद्यथा स्थिरमपि वस्तु चलमानत्वेन, चलमानं वा स्थिरत्वेन प्रतीयते तथैव साधारणा प्रकृत्या यदकर्म तदेव कर्मत्वेन, प्रकृत्या च यत्कर्म तदकर्मत्वेन मन्वते। अतो भगवता गीतायां स एव जनो बुद्धिमानित्याख्यातो यः कर्माकर्मस्वरूपज्ञानवान्–

**''कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।**

**स बुद्धिमान् मनुष्येषु स युक्तः कुत्स्त्रकर्मकृत्।।''[४] इति।**

कर्मणा मोक्षलाभाय कर्माकर्मविकर्माणां स्वरूपाणि नूनमेव अनुसन्धातव्यानि। शास्त्रानुसारेण यत्कर्तव्यं तत्कर्म, कर्मत्यागोऽकर्म, निषिद्धं च विकर्म। कर्माकर्मणोः स्वरूपं पूर्वमेव उक्तम्। ब्रह्मस्परूपोपलब्धये शास्त्रविहिताः सर्वा एव चेष्टाः कर्मपदवाच्याः। ब्रह्मस्वरूपोपलब्धौ यन्नोपकारकं तादृशानां चेष्टामात्राणां परित्याग एवाकर्म। ब्रह्मस्वरूपोपलब्धौ च या अन्तरायभूताः ताभ्यश्चेष्टाभ्यो निवृत्तिरेव विकर्म। तस्माद् ब्रह्मस्वरूपोपलब्धौ यानि कर्माणि उपादेयानि तान्येवाचरणीयानि, अनुपादेयानि च विकर्माणि परिहर्तव्यानि, तथा इन्द्रियसुखभोगाय च क्रियमाणानि अकर्माणि परित्याज्यानि। अर्जुनाय उपदेशप्रदानव्याजेन इदं तावत्तत्त्वं सर्वेभ्य एव सांसारिकेभ्यः प्रचारितमत्र भगवता।

जीवैरेव कर्माणि अनुष्ठीयन्ते। तेन ते एव कर्ममात्राणां कर्तारः। कर्ममात्रं हि फलोन्मुखि भवति। जीवैराचरितानि सर्वाण्येव कर्माणि तावत् फलानि जनयन्ति। फलानां च कर्तृगामित्वात् जीवैराचरितेभ्यः कर्मभ्यः सञ्जायमानानि सर्वाण्येव कर्मफलानि जीवानेव आश्रयन्ति। कर्मफलानि द्विधा विनाशं यान्ति– ईश्वरानुग्रहेण, भोगेन च। ईश्वरानुग्रहस्य दुःसाध्यत्वात् कर्मफलविनाशाय भोग एव साधारणानां प्रधानमवलम्बलनम्। भोगस्तु शरीरमन्तरेण न सम्भाव्यते,

---

४. श्रीमद्भगवद्गीता, ४/१८

शरीरस्यैव भोगायतनत्वात्। एवञ्च स्वकृतकर्मेभ्यो जायमानानां फलानां भोगाय जीवैः नूनमेव देहधारणं कर्तव्यम्। न च सकृन्मात्रं देहधारणेनैव कर्मफलनिचयानां भोगाः समाप्यन्ते, तेषां वैचित्र्यात्। क्रियमाणप्रारब्ध–सञ्चितभेदेन कर्मफलानि त्रिधा विभज्यन्ते। कर्मसम्पादनसमनन्तरमेव यत्फलं सञ्जायते जीव उपभुङ्क्ते च तत्कर्मफलं क्रियमाणमुच्यते। यथा अशनेन क्षुन्निवृत्तिः, पानेन पिपासानिवृत्तिश्च। पूर्वाचरितेभ्यः कर्मेभ्यः उत्पादितानां फलानां भोगो यत्र जीवेन आरब्धः तत्कर्मफलं प्रारब्धम्। यथा छात्रावस्थायामर्जिताया विद्यायाः प्रयोगः क्रियते उत्तरवर्तिनि काले। योषञ्च कर्मफलानां भोगो नाधुनापि जीवेन प्रारब्धः तादृशं हि कर्मफलं भवति सञ्चितम्। अतः सकृद्देहधारणेन क्रियमाणकर्मणा फलभोगसम्भवेऽपि प्रारब्धसञ्चितयोः सर्वथा भोगो न सम्भाव्यते पुरुषस्य। सकलकर्मफलविनाशाभावाच्च न मुक्तिं लभते जीवः। सकलकर्मफलभोगाय तस्माद् वारं वारं देहधारणं अवशम्भावि भवति जीवस्य। पुनरपि देहधारणेन कर्मफलभोगावसरे नवीनान्यपि कर्माणि आचरत्यसौ। तेषामपि नवीनकर्मणां फलानि किञ्चिद्भुज्यन्ते, किञ्चिच्चावशिष्यन्ते। एवं कर्मफलानि उत्तरोत्तरं वर्धन्ते एव, येषां नाशो सकृद्देहधारणमात्रेण न सिद्ध्यति।

श्रीमद्भगवद्गीतायां हि दृश्यते भोगव्यतिरिक्तः कर्मफलनाशोपायः। संसारी संसारे स्थित्वैव तदुपायमवलम्ब्य मोक्षमधिगच्छेत्। कः स उपायः? तत्र हि कर्मणैव कर्मबन्धननाश उपदिष्टो भगवता। प्रकारविशेषमवलम्ब्य आचरितं कर्म कर्मबन्धनं सादयति। स चायं प्रकारविशेषो ''योग''– पदेन आख्यातो गीतायां भगवता। योगस्वरूपमपि तथैव आचक्षितं गीतायां– **''योगः कर्मसु कौशलम्''**[५] इति। ननु कोऽसौ योगः? ब्रह्मस्वरूपोपलब्धये ये तावच्चत्वारः पन्थानोऽत्र गीतायां भगवता उपदिष्टा तेष्वन्यतमो हि कर्मयोगः। सामान्येन आचरितानि कर्माणि जीवानां संसारबन्धनं सम्पादयन्ति। परन्तु तान्येव कर्माणि यदि रीतिविशेषमवलम्ब्य सम्पाद्यन्ते तर्हि संसारबन्धननाशकारणानि भवन्ति। तादृशं

---

५. श्रीमद्भगवद्गीता, २/५०

हि प्रकारविशेषाश्रितं कर्मानुष्ठानं कर्मयोगपदवीं लभते। स च प्रकारविशेषः कर्मयोगस्वरूपेण वा उपदिष्टं भगवता गीतायां:—

**''योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**

**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।।''[६] इति।**

सामान्येन हि जीवाः कर्मोपयोगिफललाभाय एव कर्मसु प्रवर्तन्ते। काङ्क्षितफललाभेन भवन्ति ते हृष्टाः। विपरीतसंघटनाद् दुःखितास्ते जायन्ते। फलाकाङ्क्षया कृतं कर्म सकामं कर्मोच्यते। तेभ्यः सकामकर्मभ्यो जायमानानां फलानां भोक्तापि भवति जीव एव। फलाकाङ्क्षया कर्मसु प्रवृत्तो जीव आत्मानं तेषां कर्मणां कर्तेति मनुते। आत्मनि कर्त्रभिमानात् कर्मसिद्धौ हर्षमसिद्धौ विषादं चासावनुभवति। फलानाञ्च कर्तृगामित्वात् तेषां कर्मफलानां भोक्तापि स जीव एव भवति। एवमसकृत् क्रियमाणैः सकामकर्मभिः जीवो बद्धो भवति। कर्मयोगानुष्ठानेन एतद्बन्धनात् निःशेषेण मुक्तिर्लभ्यते। ''समत्वबुद्धिरेव'' कर्मयोगस्य आकरभूता। कर्मणां सिद्धासिद्धौ हर्षशोकयोरननुभव एव समत्वबुद्धिः। तादृशः समत्वबुद्धिमानेव कर्मयोगी इत्याख्यायते। कथं सा बुद्धिर्लभ्या? निष्कामकर्मानुष्ठानेनैव सा अधिगम्यते। फलानामाकाङ्क्षया कृतं कर्म एव निष्कामकर्मत्वेन ज्ञायते। फलाकाङ्क्षाभावान्न जीवः कर्मणां सिद्धासिद्धौ हर्षशोकौ अनुभवति। तत्कारणवशाच्च कर्तृत्वमपि न जीवस्य सम्पद्यते। कर्तृत्वाभावात् न जीव आचरितानां कर्मणा फलानि उपभुङ्क्ते। अन्यैरननुष्ठितत्वात् नान्योऽपि तत्कर्मणां कर्ता स्यात्। तेन आश्रयाभावात् निष्कामकर्मजन्यफलानि स्वत एव विनश्यन्ति। कर्मफलभोगाभावाद् बन्धनमपि न सिद्ध्यति जीवस्य। अतएव भगवता गीतायां निष्कामकर्मानुष्ठानस्यैव उपदेशः प्रदत्तः अर्जुनाय—

**''कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**

**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।''[७] इति**

---

६. श्रीमद्भगवद्गीता, २/४८

७. तदेव, २/४७

भगवदुपदिष्टस्य कर्मयोगस्य मुख्यमुपादानद्वयं–

१) न जीवः कर्मणां कर्ता स्यात्,

२) न वासौ कर्मफलोत्पत्तौ कारणं स्यात्।

निष्कामतया सम्पादितं कर्म न जीवस्य तत्कर्तृत्वं साधयति। फलाकाङ्क्षा एव कर्मफलं जनयति। तेन फलाकाङ्क्षया प्रवर्तमानस्य जीवस्य तत्कर्मफलकर्तृत्वमपि सिद्ध्यति। फलाकाङ्क्षाभावाच्च न जीवस्य कर्ता स्यात्। अतएव दृश्यते यन्निष्कामकर्म हि कर्मफलोत्पत्तौ बाधकमिति। पुनरपि निष्कामकर्मणा कर्मबन्धनान्यपि छेत्तुं शक्यन्ते। निष्कामतया कर्माचरणात् कर्मफलानुत्पत्तौ न जीवस्य क्रियमाणकर्मफलभोगः सिध्यति। कर्माचरणाच्च सञ्चितप्रारब्धकर्मणोः नाशस्तु भवत्येव, कर्मफलभोगायैव जीवैः कर्माचरणात्। एवम्भावेन निष्कामकर्मानुष्ठानेन पूर्वार्जितकर्मफलानां नाशोऽपि भवति, नवीनञ्च कर्मफलं नोत्पद्यते। ततश्च क्रमेण कर्मफलानां नाशात् मुक्तिमास्वदते जीवः। तस्माद्धि प्रोक्तं गीतायां निष्कामकर्मानुष्ठानोद्देश्यं–

**''तस्मादसक्तः सततं कार्यं कर्म समाचार।**

**असक्तो ह्याचरन् कर्म परमाप्नोति पुरुषः।।''**[८] **इति**

असक्तपदस्य व्याख्यायामुक्तं भगवता शङ्करेण स्वभाष्ये– **''असक्तो हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परं मोक्षम् आप्नोति पुरुषः सत्त्वशुद्धिद्वारोणेत्यर्थः''।**[९] फललाभाभावाच्च न कथमपि कर्मत्यागाय उत्सहेत जीवेन। यतो निष्कामकर्मत्यागात् सञ्चितप्रारब्धकर्मणोः नाशो बाध्यते। सकलकर्मफलविनाशाभावात् जीवस्य मुक्तिर्न जायते। कर्माश्रयणात् मुक्तिरासादिता मोक्षार्थिभिरिति उदाहरणप्रदर्शनपुरस्सरं प्रपञ्चिता भगवता–

**''कर्मणैव हि संसिद्धिमास्थिता जनकादयः''**[१०] **इति।**

अतः कर्मत्यागोऽप्रशस्य एव। पुनरपि न हि केनचित् निःशेषेण

---

८. श्रीमद्भगवद्गीता, ३/१६

९. तदेव, सम्पा. प्रमथनाथ–तर्कभूषणः, पृ० २१०

१०. तदेव, ३/२०

कर्मत्यागः कर्तुं शक्यते। देहधारणाय पानाशनादिकर्मणामाचरणम् अवश्यम्भावि। तेषामपि कर्मणां परित्यागाद् देहो विनश्यति। देहाभावाच्च न सिद्ध्यति जीवस्य कर्मफलभोगः। तदा कर्मफलभोगाय पुनरावर्तते जीवः। कर्मपरित्यागो वस्तुतो जीवस्यानुपकारक एव। तदुपदिष्टं गीतायां—

**''न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**

**न च संन्यसनादेव सिद्धिं समधिगच्छति।।''[११] इति।**

तादृशो हि कर्मपरित्यागी जीवो ''मिथ्याचारी'' ति कीर्त्यते। उक्तं तस्मान्भगवता—

**''इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते।''[१२] इति।**

तत्र हि भगवद्गीतायां न केवलं निष्कामकर्मोपदिष्टमपि तु तदाचरणकौशलमपि आचक्षितं दृश्यते। भगवता हि अर्जुनाय यज्ञाय कर्माचरणमुपदिष्टम्। यज्ञाय कृतं कर्म निष्कामं भवति श्रुतौ हि यागो विष्णुनोपमित आम्नायते। विष्णुर्हि ईश्वरः। ईश्वराय कृतं कर्म निष्कामं भवतीति युक्त्या यज्ञाय आचरितं कर्मापि निष्काममेव। यागेषु हि यजमान ईश्वरप्रीत्युत्पादनार्थं हविस्त्यजति। ईश्वरोऽपि तद्धवि गृहीत्वा पुष्णाति अभिवर्धते च। सोऽपि ईश्वरस्तदा धनमानादिप्रदानेन तं यजमानमपि प्रत्युपकरोति। एवमेव प्रात्यहिककर्माण्यपि यदि ईश्वरप्रीतिसम्पादनेच्छाया सम्पद्यन्ते तर्हि तान्यपि न कर्मफलानि जनयन्ति। यतस्तेषु कर्मसु जीवकर्तृत्वं न सिद्ध्यति। ईश्वरप्रीतिसम्पादनाज् जीवः कर्मणां कर्ता सन्नपि अकर्तृत्वेन प्रख्याप्यते। कर्तृत्वाभावात् कर्मफलभोगोऽपि न तेषां जायते। कर्मफलाभावात् कर्मबन्धनमपि न जायते जीवानाम्। एतादृशकर्माचरणात् स प्रकृत्या ईश्वरानुग्रहमेव लभते, क्रमेण मुक्तिञ्च आसादयति। यश्च विपरीतमाचरति, न च ईश्वरप्रीत्यर्थमपि तु आत्मसुखाय एव कर्माणि आचरति वा स तत्कर्मणां कर्ता भवति कर्मफलानि चोपभुङ्क्ते। भूयस्तथाचरणात् स पुरुषो दृढं कर्मबन्धनेन आबद्धो भवति ईश्वरानुग्रहञ्च न लभते। एवं संसारस्थितोऽपि जीव

---

११. तदेव, ३/४

१२. तदेव, ३/६

ईश्वरप्रीत्यर्थं प्रात्यह्निककर्मणामनुष्ठानेन निष्कामकर्माभ्यासं कुर्यात्। अत्रेदं पुनः स्मर्तव्यं यद् ईश्वरप्रीत्यर्थं कर्मसम्पादनेन ईश्वरो मामनुगृह्णीयादिति विचिन्त्य कृतं कर्मापि प्रकृत्या सकामकर्मत्वेनैव परिणमते। अत ईश्वरानुग्रहानाकाङ्क्षयापि कर्माणि आचरेत् पुमान्। तादृशं हि कर्म निष्कामं भवति। उक्तञ्च भगवता गीतायां–

**''यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर।।''[१३] इति**

साधारणा हि प्रायेण इन्द्रियाधीनाः। अतस्तदाचरितानि कर्माण्यपि सकामत्वेनैव परिणमन्ते। सकामकर्मानुष्ठानात् ते उत्तरोत्तरं कर्मबन्धनेन अधिकं बध्यन्ते। इन्द्रियपदेनात्र ज्ञानेन्द्रियाणि एव बुध्यन्ते। चक्षुकर्णनासिकाजिह्वात्वग्भिः पञ्चज्ञानेन्द्रियैः जीवा ज्ञानानि आहरन्ति। मनस इन्द्रियैः, इन्द्रियाणां च विषयैः सह सन्निकर्षादेव जीवा ज्ञानानि आहरन्ति।

पञ्चेन्द्रियाणि क्रमेण रूपशब्दगन्धरसस्पर्शान् विषयरूपेण गृह्णन्ति। कामाद्यन्तः शत्रुभिः वशीभूतत्वाज्जीवा न बुद्ध्या स्वमनांसि नियमयितुं शक्नुयुः। विपरीतक्रमेण मनसा बुद्धेः नियमनाद् अनियमितं मनो यथेच्छमितस्ततो भ्रमति इन्द्रियसन्निकर्षाच्च विषयान् गृह्णन्ति। यथेच्छं विषयग्रहणं फलवासनां जनयति। फलवासनापरिहाराय तस्माद् यथेच्छं विषयग्रहणं निवारणीयम्। बुद्धिनियन्त्रितं मन एव यथेच्छं विषग्रहणात् निवर्तते। अन्तः शत्रूणां कामादीनां संयमानादेव मनो बुद्ध्या नियम्यते। संयमाभ्यासाभ्यां कामादीनां विनाशः सम्भाव्यते। न हि सकृदवे जीवः निष्कामकर्मानुष्ठानं कर्तुं शक्नुयात्। संयमपुरः सरमनलसाभ्यासेन जीवः क्रमेण निष्कामकर्मसु प्रवर्तेत। अन्तः शत्रूणां विनाशेन इन्द्रियसंयमनाय तस्मादुपदिष्टः अर्जुनोऽत्र गीतायां भगवता–

**''तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।**
**पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम्।।''[१४] इति**

---

१३. श्रीमद्भगवद्गीता, ३/९

१४. तदेव, ३/४१

ततश्च संयतेन्द्रियाय अर्जुनाय कर्मयोग उपदिष्टो भगवता संयतेन्द्रियेनैव निष्कामकर्मानुष्ठानसम्भवात्—

**''यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।**

**कर्मेन्द्रियैः कर्मयोगसमक्तः स विशिरूयते।।''[१५] इति**

गीतोपदिष्टोऽयं कर्मयोग आधुनिकेऽपि काले सामाजिकाना—मुपादेयस्तथा तस्य सम्यगनुपालनात् क्षीयमानस्यास्य समाजस्य पुनरुद्धारः कर्तुं शक्यते। कर्मयोगेन ज्ञायते जितेन्द्रियत्वं, कर्ममात्रनिष्ठत्वं मनुष्यत्वञ्च। एतेषां गुणानां मानवचरितेषु विकशनात् सम्पूर्णस्य समाजस्य परिवर्तनं सञ्जायते। तस्य च गम्भीरस्य कर्मयोगतत्त्वस्य प्रयोगः कथं सामाजिकाः प्रात्यहिककर्मसु कुर्युः? प्रत्यहिककर्मसु कर्मयोगाश्रयणम् आयाससाध्यमपि न असम्भवम्। जितेन्द्रियो हि पुमान् कर्मयोगमाश्रययितुमलम्। अत इन्द्रियजय एव कर्मयोगाश्रयणे आदिमं सोपानम्। इन्द्रियजयाय आदौ जीवैः कामाद्यन्तः शत्रूणां नियमनं कुर्यात्। न हि जन्मना एव एषामन्तोरिपूनां अधिकारी भवति जीवः। अपि तु कालेन समाजसंसर्गात् तस्मिन् जायते एषां विकाशः। अतएव आबाल्यादेव शिशवो यत्नेन परिपालनीया यथा ते कुसंसर्गात् संरक्षिताः स्युः। पितृभिरेव विषयेऽस्मिन् यत्न आधेयः। तेषां महाकांक्षा एव शिशून् उत्तरोत्तरं कामादिरिपूनां वशं नयति। परन्तु यदि ते आबाल्यादेव परिच्छिन्नजीवनबोधस्य, नीतिज्ञानस्य, स्वकर्तव्यस्य च शिक्षां लभते तर्हि भाविनि काले ते निष्कामकर्मानुष्ठानाय उत्सहेय। गृहमेव शिशूनाम् आदिमं शिक्षाङ्गनम्। पितृणां दर्शनैरेव शिशवः जगदिदं पश्यन्ति आदौ। अतस्तेषां जगत्प्रति वीक्षणमेव शिशूनां चरित्रं निर्माति। प्रातिष्ठानिकशिक्षाया गुरुत्वमपि नात्र अस्वीकर्तुं शक्यते। ग्रन्थानामध्ययनेन साकं नीतिशिक्षाया ज्ञानमपि शिशूनां यथा स्यात्तदर्थं यत्न आधेयः प्रतिष्ठानैः। वस्तुतः समेषां चेष्टयैव नागरिकेषु निष्कामकर्मभावना जागरिता स्यात्।

दैनन्दिनव्यवहारेषु कर्मयोगस्य प्रयोगः कथं कर्तव्यं उदाहरणप्रदर्शनपुरस्सरं तदिह प्रस्तूयते। तद्यथा कश्चिच्छात्रः परीक्षार्थमात्मानं

---

१५. तदेव, ३/७

प्रस्तौति। सस्पृहानां कुटुम्बानामभीष्टप्रपूरणाय सोऽपि परीक्षायां भूयांसोऽङ्कान् प्राप्तुमियेष। तल्लक्ष्यसाधनायासौ पुस्तकादिसाधनेभ्यः केवलम् अधिकाङ्कलाभानुकूलानि तथ्यानि एव संगृह्णाति। एवमभीष्टसिद्धौ स तत्कुटुम्बिनश्च भवन्ति हृष्टाः असिद्धौ च दुःखिताः। कदाचित्स कुटुम्बेभ्यो भर्त्सनामपि सहते। अधुना विश्लिष्यते उभयोः फलयोः प्रभावस्तस्मिन् छात्रे। प्रथममालोच्यते तस्मिन् अभीष्टसिद्धेः प्रभावः। अभीष्टसिद्धेः स आनन्देन जीवति। परन्तु कोऽस्ति फलस्यास्य प्रभावः? इत्थमभीष्टसिद्धौ स निश्चितं जानाति यत्तथ्यमात्रसंग्रहणादेव परीक्षायां भूयांसोऽङ्का लब्धुं शक्यन्ते। तेन चासौ न कदापि विषयाणां तलमनुसन्धातुं प्रवर्तेत। विषयाणामपरामृष्टं ज्ञानं उच्चतरशिक्षाग्रहणावसरे तस्य कृते प्रतिबन्धकतां जनयेत्। अधुना विश्लिष्यते द्वितीयः पक्षः। अभीष्टसिद्धेरभावाद्दुःखेन जीवति स छात्रः। कश्चास्ति फलस्यास्य प्रभावः? सोऽसौ हतोद्यमः स्यात् क्रोधाविष्टो भवेत्, कुपथं वा गच्छेत्। दरीदृश्यन्ते बहूनि उदाहरणानि समाजेऽस्मिन् यत्र छात्राः अभीष्टफलाभावात् भग्नोद्यमाः सन्त आत्मनो घ्नन्ति, कुटुम्बेभ्यः क्रुध्यन्ति, असत्संसर्गाद् विनश्यन्ति च। परन्तु उभयत्रैव पक्षयोः कर्मयोगाश्रयणात् कुप्रभावो दूरीकर्तुं शक्यते। सिद्ध्यसिद्ध्योः समत्वमेव कर्मयोगः। अतएव कर्मयोगाश्रयणान्नासौ अभीष्टफलसिद्धौ यथेच्छं हृष्टो भवेत्, न वा तदभावात् दुःखेन कातरः स्यात्। कर्मयोगाश्रयणात्कथं समत्वबुद्धिः जन्यते तदिह उपस्थाप्यते। परीक्षायां पूर्णाङ्कलाभः फलं, तदर्थं च क्रियमानः प्रयत्नः कारणम्। तत्र कारणं पूर्वभावि, कार्यं च तदनुगामि। कर्मयोगस्यानाश्रयणादु–ल्लङ्घ्यते अयं कार्यकारणसम्बन्धः। अत्र कारणकार्यानुरोधेन निधार्यते। एष छात्रः परीक्षायामधिकान् अङ्कान् लब्धुमिच्छति इत्यतो भूयान् प्रयतते। तस्य प्रयत्नः परीक्षायां पूर्णाङ्कलाभानुकूलो न तु छात्रोचितज्ञानाहरणानुकूलः। एवं तत्प्रयत्नः कार्यानुसारि इत्यतो विषयगाम्भीर्यं न तेनोपलब्धम्। कर्मयोगाश्रयणेन तु नायं कार्यकारणसम्बन्ध उल्लङ्घ्यते। अत्रायं छात्रः परीक्षायां पूर्णाङ्कलाभाकाङ्क्षामुज्झित्य शास्त्रानुसारेण कर्तव्यमात्रबुद्ध्या अध्येति। स्वकर्तव्यस्य यथायथं पालनात् स अनाकाङ्क्ष्यैव परीक्षायाम् उत्तमाङ्कान् लभते। तल्लाभाच्च नासौ हर्षोन्मत्तः स्यात्,

शास्त्रोक्तविधीनामवश्य– पालनीयत्वात्। कदाचिद्यद्यसौ उत्तमाङ्कान् नापि लभते तथापि न दुःखग्रस्तो भवति, स्वकर्तव्यस्य यथायथमपालनादेव एवं संघटितमिति धियस्तस्मिन् सत्त्वात्। अपि तु स तदा स्वकर्तव्यसम्पादने अधिकं यन्तवान् स्यात्। वस्तुतो दैनन्दिनव्यवहारेषु सर्वत्रैव कर्मयोगसमाश्रयणात् सर्व एव जीवा उपकृताः स्युः।

कर्मयोगस्य सम्यगाचरणेन जीवानां भौतिकाध्यात्मिकभेदेन द्विविधो लाभः स्यात्। कर्मयोगाश्रयणाज् जीवानां कर्मबन्धनं नश्यते। कर्मबन्धनच्छेदात्तेषां मोक्षामार्गः सुगमः स्यात्। अयमस्ति आध्यात्मिको लाभः पुरुषाणाम्। आधुनिके काले विविधेषु अन्वेषणेषु एतत् प्रतिभाति यत् कर्मयोगाश्रयणेन भौतिकोऽपि लाभो जायते जीवानाम्। तद्यथा– जीवेषु वर्धते आत्मसम्माननबोधः, तेषां चित्तानि विकाशं लभन्ते कर्मसु दाक्ष्र्यं लभन्ते ते, चित्तोद्वेगश्च अपगच्छन्ति जीवानाम्।

समराङ्गणे कुरुक्षेत्रे भगवता अर्जुनाय गीतोपदिष्टा। भगवता एतादृशेन कर्मणा एतदेव सूचितं यज्जीवेन नूनमेव कर्म कुर्यात्। अतरतो विषण्णमपि अर्जुनं युद्धाय प्रोद्बोधनाद् भगवता एतदपि उपदिष्टं जीवेभ्यो यत् सर्वत्रैव अवस्थासु तैः स्वकर्तव्यं नूनमेव सम्पादनीयम्। अस्माद्धेतोः सहस्त्रवर्षेभ्योऽपि पूर्वमुपदिष्टाया गीतायाः प्रासङ्गिकता इदानीन्तनेऽपि काले युज्यत एव। अस्या गूढतत्त्वान्वेषणेन जीवानां भौतिकमाध्यात्मिकश्च जीवनं शिवं स्यादिति अलं विस्तरेण।

***

# संस्कृतकाव्यशास्त्रेषु सौन्दर्यस्यावधारणा

**प्रो० रामसुमेरयादवः**

*अध्यक्षचरः, संस्कृतप्राकृतभाषाविभागः,*

*लखनऊविश्वविद्यालयः, लखनऊ*

प्राचीनकालादेव काव्यात्मतत्त्वविषये चिन्तनं विहितं वर्तते। संस्कृतसाहित्यशास्त्रीयाचार्यैः रसालङ्कारवक्रोक्तिरीत्यौचित्यादयः काव्यात्मरूपेण प्रतिष्ठिताः। सौन्दर्येण विना तत्त्वानीमान्यपकर्षकान्य–ङ्गीकतानिः काव्येषु विवेचना विहिता सुन्दरशब्दात् ष्यञ् प्रत्यये कृते सौन्दर्य शब्दः उद्भवति।[1] सुन्दरस्य भावः सौन्दर्यम्। सौन्दर्यतत्त्वानुशीलेन सौन्दर्यानुभूतिविषये भारतीयमनीषा चिरादनुसन्धानपयोधौ निमग्नासीत्। संस्कृतकाव्यतत्त्वेषु नाट्यतत्त्वेषु च सौन्दर्यबीजान्युपलभ्यन्ते। सूपसर्गपूर्वकात् ''उन्दी क्लेदने धातोः अरन् प्रत्यये विहिते सति सुन्दरं'' शब्दः निष्पद्यते। सु सुष्ठु उनन्ति, यच्चित्तमार्द्रयति द्रवीकरोति[2] तदेव सुन्दरमित्यभिधीयते। अथ च सूपसर्गपूर्वकात् नन्दधातोः अरन् प्रत्ययानन्तरं सुन्दर–शब्दः निष्पन्नो भवति। ऋग्वेदे सुन्दरं शब्दः बहुत्रोपलभ्यते। सुन्दरनराय सूनरः प्राप्यते–''**यो बाधते ददाति सूनरं वसु स धते अक्षितिश्रवः**[3] तथा च ''**अपोमहि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी**''।[4] सुन्दरशब्दस्य पर्यायरूपेणानेके शब्दाः विलसन्ति।

**''सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।**
**कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जुलं तथा।**[5]
**अभीष्टेऽभीप्सितं हृद्यं ददितं वल्लभं प्रियम्।।**

सौन्दयकारीकायां प्रो० ब्रजमोहनचतुर्वेदिवर्यैरपि सौन्दर्यपर्याय

---

१. संस्कृत हिन्दी कोश–वामन शिवराम आप्टे पृ० ११३०

२. वाचस्पत्यम्– पृ० ५३१४

३. ऋग्वेदः–१/४०/४

४. तदेव–७/८१/१

५. अमरकोषः, तृतीयकाण्डम्–५२/५३

उद्दिष्टाः—

**''रमणीयता च शुचिता, लावण्यं चारुता च सौन्दर्यम्।**

**अभिरामता मुधुरता उभ चाष्टौ पर्यायाः।।**[६]

भरतमुनिना प्रोक्तम्—

**''मदुललितपदार्थं गूढशब्दार्थहीनं**

**बुधजनसुखभोग्यं युक्तिमन्नृत्तयोग्यम्।**

**बहुरसंकृमार्गं सनिधसन्धानयुक्तं,**

**भवति जगति योग्यं नाटकं प्रेक्षकाणाम्।।**[७]

वैदग्ध्यभणितिरेव काव्यं कुन्तेनाभिहितम्। औचित्यं राजीवदस्य स्थिरं काव्यस्य जीवितमित्यौचित्यमेव क्षेमेन्द्रेणाङ्गीकृतम्। रसानुभूतिरेव सौन्दर्यानुभूतिरिति वाक्यंर सात्मकं काव्यं व्याहृत्य विश्वनाथेन सौन्दर्यमेव पृष्टीकृतम्। रमणीयार्थप्रतिपादकः शब्दः काव्यमिति पं० राजजगन्नाथेनाङ्गीकृतम्। रससिद्धान्ते सौन्दर्यस्य महन्महत्त्वं भजतेतराम्। अभिवनगुप्तपादेन व्रह्मानुभवमिवानन्दमनुभूयते तदेव सौन्दर्यम्। वामनअनन्दवर्धनाचार्य—भोजराज—मम्मट विश्वनाथ— पं० राज—जगन्नाथ गोविन्दचन्द्र—पाण्डेयवर्यैः केवलं केवलं सौन्दर्यमेव व्याख्यायितम्।

रमणीयता शब्दस्य प्रयोगः सौन्दर्यपर्यायरूपेण क्रियते रसक्रीडायां धातो अनीपप्रत्ययोगेन रमणीयशब्दः निष्पद्यते।[८] ततः तल् प्रत्यये विहिते रमणीयता शब्दः। रमणीयस्य भावो रमणीयता। शिशुपालवधे महाकविना माघेन **क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः।''**[९] परिभाषितम्। काव्यशास्त्रीये ग्रन्थे रसगङ्गाधरे पं० राजजगन्नाथेन काव्यलक्षणाप्रसंगे रमणीयतैव काव्यरूपेणाङ्गीकृतम्। रमणीयार्थप्रतिपादकः शब्दः काव्यम्। आनन्दवर्धनेनाऽपि रमणीयशब्दः सौन्दर्याथमेव प्रयुक्तः। तस्य हि ध्वनेः स्परूपं

---

६. सौन्दर्यकारिका—कारिका—३

७. नाट्यशास्त्रम् पृ० १७/१२६

८. संस्कृत हिन्दी कोष— पृ० ४८४

९. शिशुपालवधम्—४/१७

सकलसत्कविकाव्योपनिषद्भूतं अतिरमणीं अणीयसोभिरपि चिरन्तन काव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्।।[१०] कुन्तकेवन काव्याह्लादकाय रमणीयशब्दः प्रयुक्तः। ''अन्यच्चकीदृष्य– किमप्यामोदसुन्दरम्। किमपि अव्ययदेश्यं सहृदयसंबेद्यं आमोदः सुकुमारवस्तुधर्मो रञ्जकत्वं नाम। तेन सुन्दर रञ्कत्वरमणीयम्।[११] भक्तिवादिभिः माधुर्यस्य सङ्कल्पना विहिता। उज्ज्वलनीलमणौ माधुर्यं व्याख्यायितम्। रूपगोस्वामिना भणितं रूपं किमप्यनिर्वाच्यं तमोमाधुर्यमुच्यते।[१२] विश्वनाथेन साहित्यदर्पणे सर्वावस्थाविशेषेषु माधुर्यं रमणीयतेति व्याहृतम्।[१३] मम्मटाचार्येण काव्यप्रकाशस्य गुणालङ्कारभेदनिरूपणेऽष्टमे उल्लासे **आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्**''[१४] व्याहृत्य सौन्दर्यमेव सम्पोषितम्। कैश्चिदऽचार्यैः कान्तिशब्दः सौन्दर्यस्य वाचकरूपेणाङ्गीकृतः। कमु कान्तौ धातोः क्तिन् प्रत्यये कान्ति– शब्दः व्युत्पन्नः[१५] रीतिमतादिभिराचार्यैः गुणविवेचने कान्तिगुणः स्थापितः। औज्ज्वल्य क्रीडितः[१६] दीप्तिरसत्वं कान्तिः।[१७] आचार्येण साहित्यदर्पणकारेण शोभादीप्ती प्रथक् स्वीकृते।

**''रूपयौवनलालित्यं भोगाधैरस्यभूषणम्।**
**शोभाप्रोक्ता सैव कान्तिरन्यथाप्यायिता द्युतिः।।**[१८]

**कान्तिविषये स एव व्याहरति कान्तिरौज्वल्यम्।**[१९]

हरिदाससिद्धान्तवागीशमहाभागेन मनोहारिणौ शब्दार्थो काव्यम्

---

१०. ध्वन्यालोकः– पृ० ३७
११. वक्रोक्तिजीवितम्–पृ० ६७
१२. उज्ज्वलनीलमणिः–२/७
१३. साहित्यदर्पणः– पृ० ८४
१४. काव्यप्रकाशः– अष्टमोल्लासः–पृ० ३८८
१५. संस्कृतहिन्दी शब्दकोष–वामनं शिवराम आप्टे– पृ० २६४
१६. काव्यालङ्कारसूत्रवृत्तिः–३/१/२५
१७. तदेव–३/२/२५
१८. साहित्यदर्पणः–पृ० ८४
१९. तदेव–पृ० ८३

मनोहारित्वं च रसमाधुर्येणालङ्कारसौन्दर्येण भाववैचित्र्यादीनां च रसिकालङ्कारकत्वम्।[२०]

एवमेव मनोहरः सौन्दर्यस्य पर्यायरूपेण जगति विश्रुतः शोभाशब्दोऽपि सौन्दर्यस्वरूपं वर्तते।

**शोभाविलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च।**
**ललितं च तथौदार्यं तेजोऽष्टाविति पौरुषाः।।**[२१]

एवमेव नायिकायाः विवेचने सौन्दर्यमभिव्यक्तम्।

**भावो भावश्च होला च शोभाकान्तिस्तथैव च।**
**दीप्तिमाधुर्यशौर्ये च प्रागल्भ्यं स्यादुदारता।।**[२२]

आचार्यदण्डिभिः ''**काव्यशोभाकरान् धर्ममलङ्कारान् प्रचक्षते।।**[२३]

भणितम्। विश्वनाथेन शोभासन्दर्भे रूपयौवन लालित्यभोगा–द्यैरङ्गभूषणं शोभा प्रोक्ता।।[२४]

कुन्तकेन ''**साहित्यमनयो शोभाशालितां प्रति काप्यसौ।**
**अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः।।**[२५]

लावण्यशब्दस्य प्रयोगोऽपि सौन्दर्यपर्यायरूपेणाङ्गी कृतम्

लुणाति इति लवणम्। लभ् छेदने धातोः कर्तरि अर्थे ल्युटि कृते लवण पदं निष्पद्यते। अभिनवगुप्तपादैः लावण्यस्य विषये कथितम्। ''**लावण्यं हि नामवय व संथानाभिव्यंग्यभवनव्यतिरिक्तं धर्मान्तरमेव। न यावत्वनितानामेव निर्दोषता व भूषयोगो वा लावण्यम्।** कुन्तकेनापि लावण्यं परिभाषितम्–

---

२०. काव्यकौमुदी–पृ० ३
२१. अग्निपुराणम्–३३६/४७
२२. तदेव–३३६/४६
२३. काव्यादर्श–२/१
२४. साहित्यदर्पणम् पृ० २७३
२५. वक्रोक्तिजीवितम्–१/१७

**''वर्णविन्यासविच्छित्तिपदसंधानसम्पदा।**

**स्वल्पया बन्धसौन्दर्यं लावण्यमभिधीयते।।**[२६]

रूपगोस्वामिभिरुज्ज्वलनीलमणौ लावण्यं प्रतिपादितम्।

**मुक्ताफलेषु छायायास्तरूपल्लवमिवान्तरा।**

**प्रतिभाति यदेतेषु लावण्यं तदिहोच्यते।।**[२७]

चारुताशब्दोऽपि सौन्दर्यं पुष्णाति। चाति चित्ते अर्थात् चरधातोः उण् प्रत्यये विहिते सति चारुशब्दो निष्पन्नो भवति। चारुतायाः भावा प्रसन्नता। भामहाचार्येण सौन्दर्यस्य कृते चारुता शब्दः प्रयुक्तः।

**न नितान्तादिभासेण जायते चारुता गिराम्।**

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।।**[२८]

पाश्चात्यमतेषु सौन्दर्यार्थं ब्यूटी (मून फ्रेंञ्च Beaute)

शब्द प्रयुज्पयते Beauty शब्दः Beau यस्यार्थ प्रियः रसिकः श्रृङ्गारि पुरुषः यथा च Ty भाववाचक प्रत्ययेन संम्प्रयुक्तत्वात्। फ्रांसीसीभाषायां सौन्दर्यस्य समानार्थी शब्दः बैल लातीनीभाषायां पुलक्रमः यूनानी भाषायां कलेस सुन्दरस्य सामीप्यमधिगच्छति। पाश्चात्यकाव्यशास्त्रै एक्सीलेंस सब्लाइम इत्यादयः शब्दाः प्रयुज्यन्ते। सौन्दर्यमहिमानं महाकाविना कीट्स महोदयेन कथितम् सौन्दर्यं वस्तु सदैव आनन्ददायिनी भवति। शेक्सपीयर महोदयेनापि कथितम् Beauty liss sin the yes, at beholdor अर्थात् सुन्दरता द्रष्टुः नेत्रयोः निहिता भवति। वाऽमगार्टेन मतानुसारेण ''सौन्दर्यस्यानुभूतिः संवेदनारूपेण भवति। संवेदमातो प्राप्तं सौन्दर्यं पूर्णत्वं वोधयति सुकरात सुन्दरं शिवस्य ए एव तथा च सौन्दर्य कल्याणकारी वर्तते।[२६] प्लेटों सत्यं सुन्दरञ्च एव एवाङ्गीकरोति। अरस्तू सौन्दर्यं आनन्दप्रदं

---

२६. वक्रोक्तिजीवितम्–१/३२

२७. उज्ज्वलनीलमणि–रूपगोस्वामी–पृ० २७३

२८. काव्यालङ्कारः–१–३६

२६. सौन्दर्यम्–राजेन्द्र बाजपेयी– पृ० ४१

स्वीकरोति।[३०] प्लाटिनस सौन्दर्यमाध्यात्मिकानुभूतिरूपेण स्वीकरोति।[३१] सन्त आइंस्टाइनमते वर्णनां मधुरता सुसंगतिश्च सौन्दर्यमुपजनयति।[३२] सेन्ट थामस एक्विनास महोदयेन सौन्दर्य बुद्धितत्वस्य इन्द्रियबोधस्य प्रकटीकरणमस्ति।[३३] फ्रांसिसवकेन, हांत्स, लंक, जी डब्ल्यू लीवन्जि शेफ्टशवरी एडीसन जार्जवर्फले, हचसन, विंकलमैन, काण्ट एडमर्ड बर्क, जी. ई. लैसिंग, डेविडह्यूम, कैडरिक शिलस, जार्ज विलयम फ्रेडरिक नीत्से तैओदारे लिप्स, फ्रायड, वेनेडेटो, फ्रोचे, एन.जी.चर्निशेवस्की, जान रस्किन, आई.ए.रिचर्ड, हेमेटकून्न कासांके इत्यादिभिः पाश्चात्यविपश्चिदिभः सौन्दर्यं विभिन्नरूपूण निजमत्या गत्या चोपवर्णितम्। सौन्दर्यशास्त्रै हरदनीलालशर्मामहोदयैः आह्हालादानुभूतिः सौन्दर्यं स्वीकृतम्।[३४] डॉ० रवीन्द्रनाथेन सत्यं सौन्दर्यं एक एव वस्तु तस्मादेवानन्दमवाप्यते।[३५] डॉ० नागेन्द्रेण ललितकला रूपेणाभिव्यक्तं सौन्दर्यं सौन्दर्यं भवति।[३६] कान्तिचन्द्रपाण्डेयमहाभागेन सौन्दर्यशास्त्रं ललितकलानां विज्ञानं दर्शनवलांगीकृतम्।[३७] रूपगोस्वामिवर्यैः सौन्दर्यं विवेचितम्—

**अङ्गप्रत्यङ्गकाव्यानां यः सन्निवेशो यथोचितम्।**

**सुश्लिष्टसन्धिवन्धः स्यात्तत्सौन्दर्यमुदीर्यते।।**[३८]

आधुनिकसौन्दर्यतत्त्ववेतृभिः गोविन्दचन्द्रपाण्डेयवर्यैः स्वस्मिन् ग्रन्थे सौन्दर्य दर्शन विमर्शे सौन्दर्यं स्पष्टरूपेण परिचर्चितम्।

---

३०. सौन्दर्यशास्त्रम्— डॉ० ममता वाजपेयी—पृ०२२
३१. भारतीय सौन्दर्यशास्त्र की भूमिका—डॉ० नागेन्द्र—पृ २१
३२. A History of Art Hlics - P-135-36
३३. स्वतंत्रकलाशास्त्रम्—द्वितीयभागः—कान्तिचन्द्र पाण्डेय— पृ० २४६
३४. सौन्दर्यशास्त्रम्—डॉ० हादरीलाल शर्मा, पृ० ६—१०
३५. सौन्दर्यविमर्शः—पूरनचन्द्र टण्डन— पृ० २३
३६. भारतीय सौन्दर्य शास्त्र की भूमिका
३७. सौन्दर्यशास्त्र—डॉ० ममता चतुर्वेदी पृ० २४०
३८. उज्ज्वलनीलमणि—रूपगोस्वामी—पृ० २७४

**अस्तादो ज्ञानमत्रिण विमृश्यश्च स्वरूपतः।**

**आकारगतोत्कर्षस्तत् सौन्दर्यमभिधीयते।।**[३९]

आधुनिकैराचार्यैः शिवजीउपध्यायैः साहित्यसन्दर्भः इत्यस्मिन् काव्यशास्त्रीये स्वस्मिन् ग्रन्थे सौन्दर्यतत्त्वं काव्यकर्मणि पूर्णरूपेणानिवार्य–मङ्गीकृतम्

**तदेतत्परिहारेण साधारण्येन सर्वदृक्।**

**काव्यमेवेति साहित्ये सौन्दर्यं सम्प्रतिष्ठते।।**[४०]

निष्कर्षरूपेण कथितं शक्यते यदाधुनिकैः समीक्षकैः विपश्चिद्भिश्च विभिन्नमतोपस्थापनैरयमाशयो विहितः। सौन्दर्यमानन्दस्यानुभूतिः तद्धि सत्यं शिवं सुन्दरं इति रूपेण विश्वे समाहितम्।

सौन्दर्यमेवास्ति यज् जगति परिव्याप्तं वर्तते। सौन्दर्यस्य सम्बन्धो ललितकलाभिस्सह वर्तते। सौन्दर्येण विना जनः कर्मप्रवृत्तो नैव भवितुमर्हति सौन्दर्यमवलम्ब्यैव कव्यनिर्माणस्य भित्तिनिर्माणं कविभिः मनीषिभिः समजायत्। प्रभुनिर्मितसृष्टेः प्रत्येकं तत्त्वे सौन्दर्यं निहितं विद्यते। वसन्ततौ नवपल्लवितपुष्पाणि वर्षतौ मेघानां मलयावहं सहृदयनां मनांसि आमोदयन्ति। न केवलं सौन्दर्यं बाह्यं भवति अपितु आन्तरकिं जगत्यपि सततं हि विद्यमानं भवति। सौन्दर्येणैव वस्तुनि रुचिकाणि प्रतीयन्ते।

तान्येवास्मानाह्लादयन्ति। रसरहितानि वस्तूनि दुःखकारकानि भवन्ति। सौन्दर्यस्यांगीकारकाले प्रायशः त्रयोः मताः उपस्थापिता–

१. सौन्दर्यं वस्तुनि निहितो भवति अस्मात् तत् वस्तुनिष्ठं स्वीकरणीयम्।

२. सौन्दर्यं मानसिकानुभूतेः विषयः अतः अस्यात्मनिष्ठत्वमङ्गीकर्तव्यम्।

३. सौन्दर्यं द्वयोः स्थानयोः विषयः अस्मादुभयनिष्ठत्वमङ्गीकराणीयं सौन्दर्यनिर्धाकेण।

---

३९. सौन्दर्य दर्शन विमर्श–कारिका–८७

४०. साहित्यसन्दर्भः– शिवजी उपाध्याय–कारिका–६

विचारणीयोऽयं प्रश्नः यत् सौन्दर्यं वस्तुनिष्ठो धर्मः उत्वा दृष्टरि विहितधर्मः सौन्दर्यविषये विद्वज्जनेषु मतैक्यं नास्ति। एके स्वीकुर्वन्ति यद् वस्तुनि सौन्दर्यं भाति तदैव तत् सुन्दरं प्रतिभाति अन्ये कथयन्ति वास्तुनि सुन्दरता अभविष्यत्, तदा सर्वाणि हि वस्तुनि जनानां कृते रुचिकराणि अभविष्यत् परन्तु एवं नास्ति। अपरैः उभयनिष्ठताङ्गीकृता। वस्तुनिष्ठसौन्दर्यं स्वीकुर्वन्तः भरतमुनि–कालिदास–पण्डितराजगन्नाथ– सुरेन्द्र– आचार्यरामचन्द्रशुक्ल– डॉ० रामानन्दतिवारी– डॉ० रामविलास– सुकरात–अरस्तू देकार्तरिचर्ड प्रभृतय आचार्याः विलसन्ति। पाश्चात्यैः कमनीयता मनोहरता मसृणता मधुरता लालित्यादिगुणैरेव सौन्दर्यं विश्लेषयन्ति।

संस्कृते काव्यशास्त्रे नाट्यशास्त्रे च सौन्दर्यं हि विलसति। सौन्दर्यस्यानन्दमयी प्रतीतिरवे काव्यशास्त्रस्याधरः। भारतीयवाङ्गमये काव्यशास्त्रनाट्यशास्त्रयोः महनीयं विवेचन सौन्दर्यपरिधावे सञ्जातम्। काव्यसृष्टेः निर्माणं कविसहृदयोः दृष्ट्या भवति।

**दुखार्तानां श्रमार्ताणां शोकार्तानां तपस्विनाम्।**
**विश्रन्तिजननं काले नाहपयेतद्भविष्यति।**

**धर्म्यं यशस्यमायुष्यं हितं बुद्धि विवर्धनम्।**
**लोकोपदेशजननं नाट्यमेतद्भविष्याति।**[४१]

वामनाचार्येण **"काव्यं सहृदयार्थ प्रीति कीर्तिहेतु त्वात्"**[४२] इति स्वीकृतम् आनन्दवर्धनाचार्येण–तेन ब्रूमः सहृदयमनः प्रीतये **तत्स्वरूपमिंत्यङ्गीकृतम्**[४३]

कुन्तकेनापि–

**धर्मादिसाधनोपायः सुकुमारकुमोदितः।**

**काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।**

---

४१. नाट्यशास्त्रम्–१/११४/११५

४२. काव्यलङ्कारसूत्र वृत्ति–१/१/३

४३. ध्वन्यालोक–१/१

**व्यवहारपरिस्पन्दसौन्दर्यव्यवहारिभिः।**

**सत्काव्याधिगमादेव नूतनौचित्यभा**

**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**

**काव्यमृतरसेनान्तश्चमत्कारो वितन्यते।।**[४४]

भोजराजैः

**निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्**

**रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।**[४५]

मम्मटः सद्यः परनिवृत्तिरेव मुख्यं प्रयोजनं स्वीकरोति।

अभिनवगुप्तपादाः प्रतिभया शास्त्रीयं विवेचनं विदधति

**प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा। तस्याः विशेषो रसावेश वैशद्यसौन्दर्यं काव्य निर्माणक्षमत्वम्।**[४६]

सौन्दर्यं काव्यप्रयोजने काव्यकारणे काव्यलक्षणे नाट्यशास्त्रे सर्वतः परिस्फुरति। अभिनये–अंगिक–वाचिक–सात्त्विक–आहार्याभिनयेषु, चित्रकला–मूर्तिकला–वास्तुकलास्वापि सौन्दर्यदर्शनं भवतिं रससिद्धयेऽपि सौन्दर्यं परिलक्ष्यते।

इति समासतः वक्तुं शक्यते यत्र तत्र सर्वत्र सौन्दर्यमेव तिष्ठति एवं काव्यशास्त्रे सौन्दर्यरूपा व धारण प्रारम्भत एव दरीदृश्यते।

***

---

४४. वक्रोक्तिजीवितम्–१/३/४/५

४५. सरस्वतीकण्ठाभरण–१/४

४६. ध्वन्यालोकलोचनम् प्रथमोद्यतः– पृ० ६४

# शरीरं सुधा च

**डॉ० अनादिचरणबेहेरा**
*रेमुणा, बालेश्वरम्, ओडिशा*

शरीरं–रस–रक्त–मांस–मेद–अस्थि–मज्जा–शुक्रादिभिः सप्तधातुभिः निर्मितम्। अस्थि तु पञ्चमः धातुर्भवति यः शरीरस्य धारणार्थं समर्थो भवति। अस्य अस्थिनः उपादानं भवति सुधा (Calcium)। अस्थि शरीरस्य सुन्दररूपं ददाति तथा शरीरस्य सौन्दर्यकरणे मुख्यां भूमिकां निर्वहति। अतः सुश्रुतेन शरीरस्थाने प्रोक्तम्–

**अभ्यन्तरगतसारैर्यथा तष्ठिन्ति भूरुहाः।**
**अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम्।।**

**तस्माच्चिरं विनष्टेषु त्वं मांसेषु शरीरिणाम्।**
**अस्थिनि न विनश्यन्ति साराण्येतानि देहिनाम्।।**

अर्थात् वृक्षो यथा आभ्यन्तरमन्तः सारमाश्रित्य दण्डायमानो भवति तथा शरीरमपि तस्य आभ्यन्तरसारभागम् अस्थिनि अधिकृत्य जीवितः तिष्ठति। अतः शरीरस्य सर्वेषु धातुषु नष्टेऽपि अस्थिः दीर्घकालं यावत् नष्टं न भवति। अतः सुधा (Calcium) न केवलं अस्थिनिर्माणकार्यं करोति अपितु अनेन वहुविधं कार्यं सम्पादितं भवति।

**सुधायाः कार्यम्–**

हृदयस्य गतेः नियन्त्रणम्, रक्तस्य एकत्रीकरणं शिशूनां शारीरिकबृद्धिकरणं, उच्चतायाः वृद्धिकरणं च अस्याः प्रमुखकार्याणि भवन्ति। त्रिंशत्– वर्षवयसादनान्तरं स्त्रीणां शारीरिसुस्थता क्षेत्रे च अस्याः भूमिका गुरुत्वपूर्णा भवति। अस्या सुधायाः अभावेन अनेके रोगाः अपि जायन्ते।

तथा च एषा सुधा मांसपेशिनः कार्यनिमित्तं, हस्नायुनां कार्यनिमित्तं, शरीरस्थितेषु कोषेषु जलस्य साम्यतारक्षणाय, अस्थिनां निर्माणाय, दन्तानां उत्थानाय तथा दृढीकरणाय, मानसिकस्वास्थ्यस्य अक्षुण्णरक्षणाय,

स्मृतिशक्तिवर्द्धनाय च कार्यं साध्यति। अपि च या नारी शिशून् स्तन्यं पाययति तस्याः कृते अपि सुधायाः कार्यं गुरुत्वपूर्ण्णं भवति।

पुनश्च स्त्रीणां डिम्बाणुप्रस्तुतिकार्ये, डिम्बाणोः परिपक्वसाधनकार्ये सुधायाः भूमिका गुरुत्वपूर्ण्णा! हृदयस्य मांसपेशिनः यथार्थकार्यसम्पादनार्थे विलम्बेन रक्तस्य एकत्रीकरणे, शिशूनां विलम्बेन नूतनदन्तनिष्कासने, उच्चतायाः बृद्धौ अभावे सुधायाः आवश्यकता अस्त्येव।

सुधायाः अभावे अष्टिओपरोसिस् (Ostioperosis) अष्टोपेनिआ (Ostopenia) सुधाभावः (Hypocalcemia) सदृशाः भयङ्कराः रोगाः जायन्ते।

पुरुषाणाम् अपेक्षया स्त्रीणाम् अस्याः सुधायाः अभावः मात्राधिक्येन परिलक्ष्यते। कारणम् ऋतुस्रावस्य परिसमाप्तेः प्राक् परं च सुधायाः अभावस्य भयङ्करता दृश्यते। कारणम् अस्मिन् समये Astrogen Harmon इत्यस्य सन्तुलनस्य अभावाद् एतादृशं भवति। इदं Harmon पुरुषाणामपेक्षया भिन्नं भवति। इदं च अस्थिना सह सम्पर्कितो भवति। अतः पुरुषाणामपेक्षया स्त्रीभिः सुधायाः उपरि विशेषं ध्यानं दातव्यम्।

**सुधायाः अभावस्य कारणम्–**

- अस्माभिः भुक्तेभ्यः खाद्येभ्यः सुधायाः उपयुक्तभावेन शोषणाभावस्य कारणम् अस्माकं परिपाकक्रिया दुर्बला भूत्वा अन्त्रे शोषणस्य अभावः।
- केनचित् औषधभक्षणेन यदि क्रमागतभावेन उदरे काचित् विक्रिया जायेत।
- मनुष्यस्य कण्ठदेशे अवस्थितः Para Thiroid Gland नामकः अंशः यदि शास्त्रक्रियया निष्कासितः स्यात् अथवा तदंशो यदि उपयुक्तभावेन कार्यक्षमो न स्यात्। (कारणं Para Thiroid ग्रन्थिः शरीरे सुधायाः समानतां रक्षति)।
- बहुदिनं यावत् सुधायाः अग्रहणम् अथवा शरीरे सुधायाः उपयुक्तभावेन ग्रहणाभावः।
- बहूनि परिवाराणि सन्ति येषां परिवारे सुधायाः अभावः परिलक्ष्यते।
- गर्भावस्थायां गर्भस्य प्रस्तुतिनिमित्तं बहुपरिमाणेन सुधायाः आवश्यकता

वर्त्तते, यस्मात् कारणात् शरीरे सुधायाः अभावो भवति।

- प्रसवानन्तरं शिशोः सत्न्यपानार्थम् अधिकपरिमाणेन सुधायाः आवश्यकता भवति, तदर्थं शरीरे सुधाया अभावः दृश्यते।
- शिशूनां शारीरिक–अभिवृद्ध्यर्थं सुधायाः आवश्यकताकारणत् सुधायाः अभावो दृश्यते।
- विटामिन् (D) इत्यस्य अभावात् सुधायाः अभावो दृश्यते।
- शरीरे Phosphet इत्यस्य वृद्धेः कारणात् सुधायाः अभावो भवति।
- बहुविधानाम् औषधिनां प्रयोगेण यकृतः (Liver) कार्ये विघ्नं जायते। ते औषधयः यथा Painkiller तथा Steroid इत्यादीनाम् अत्यधिकं प्रयोगः।
- वृक्कस्य (Kidny) दुर्बलात् सुधायाः अभावो जायते।
- अग्न्याशयप्रदाहवत् कष्टदायके रोगे दीर्घदिनं यावत् पीड़ितत्वात् शरीरे सुधायाः अभावः दृश्यते।

**सुधायाः अभावस्य लक्षणानिः–**

१. अस्थि–इत्यादीनां दुर्वलताकारणात् समग्रे शरीरे यन्त्रणा।

२. स्त्रीणां मासिकधर्मे उदरपीडा।

३. दन्तक्षयः दन्तानां दुर्बलता, केशपतनम्, भ्रमसृष्टिश्च।

४. नखस्य कुरूपता, नखस्य भग्नता।

५. सर्वदा क्लान्तेरनुभवः अथवा अल्पपरिश्रमेण दुर्वलतानुभवः।

६. अनिद्रा तथा च एतदर्थं चिन्तादयो लक्षणानि।

७. हृदयस्य स्पन्दनबृद्धिः।

एतद्भिन्नं सुधायाः अभावेन वातदोषादिबृद्धिः, शरीरे वातव्याधेः लक्षणं दृश्यते।

महर्षिचरकेण वातव्याधेः लक्षणप्रसङ्गे प्रोक्तम्–

**सङ्कोचः पर्वणां स्तम्भो भङ्गोऽस्थिनां पर्वणामपि।**
**रोमहर्षः प्रलापश्च पाणिपृष्ठ शिरोग्रहः।।**

**खाञ्जपाङ्गुल्य कुब्जत्वं शोथाङ्गानामनिद्रता।**
**गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता।।**
**शिरो नाशाक्षिजतृणां ग्रीवायाश्चापि हुण्डनम्।**
**भेदास्तदोऽर्त्तिराक्षेपो मुहुश्चायास एव च।।**

अर्थात् वायुप्रकोपने सन्धिषु यन्त्रणा, स्तम्भता, अस्थिभग्नता, सन्धिविच्युतिः, रोमहर्षः, प्रलापः, हस्तपदादिषु यन्त्रणा च दृश्यते। अङ्गस्य शुष्कता, निद्रानाशः च भवतः। गर्भ–शुक्र–रजोनाशश्च भवति। अङ्गस्य स्फुरणम्, अङ्गस्य सुप्तता (स्पर्शहीनता) तथा च भेदनवत् सूचिकाभेदवत् च पीडा अक्षेपादयः लक्षणानि दृश्यन्ते।

अस्थिक्षयविषये सुश्रुतेन उक्तम् यथा–

**अस्थिक्षयेऽस्थि तेजो दन्तनखभङ्गो रौक्ष्य च।।**

महर्षिचरकेणऽपि उक्तम्–

**केशलोमनखश्मश्रुद्वीजप्रपतनं श्रमः।**
**ज्ञेयमस्थिक्षये लिङ्गासन्धिशैथिल्यमेव च।।**

महर्षिकाश्यपेनाऽपि उक्तम् यथा–

**बालसम्वत्सरापन्न पादाभ्यां यो न गच्छति।**
**स फक्क इति विज्ञेयः।। (काश्यपसंहिता, फक्करोगचिकित्सा, तृतीयोऽध्यायः)**

सुधायाः अभावेन शिशूनां रिकेट् (Rickets) वयस्कानाम् अष्टोमालेशिआ (Ostomalesia) तथा बृद्धानाम् अष्टिओपरसिस् (Osteoporosis) सदृशाः रोगा दृश्यन्ते।

एते रोगाः शिशु–कैशोर–युवक–बृद्धादिषु कासुचित् अवस्थासु भवितुमर्हन्ति। अतः अस्य समतानिमित्तं शरीरे विटामिन्–सि, विटामिन्–डि इत्यनयोः स्थिरता अत्यन्तमावश्यकी भवति।

अतः शरीरं विटामिन्–डि इत्यस्य आगमनस्य स्रोतकाराणि यथा– (१) सूर्यकिरणेन (२) खाद्यद्रव्यमाध्यमेन (३) औषधेन।

खाद्यद्रव्यं द्विविधं यथा– (१) निरामिषभोजनम् (Veg) (२) आमिषभोजनम् (Non Veg)

विटामिन् ईदृशमेकम् उत्पादनम् अस्माभिः भक्षितं सुधायुक्तं खाद्यम् अथवा सुधायुक्तमौषधम् अनायासेन अस्थि यावत् नीत्वा अवस्थापयति।

अस्माभिः भक्षितेभ्यः सर्वेभ्यः खादेभ्यः विटामिन्–डि विशत–प्रतिशतं शरीरं गृह्णाति। परन्तु सूर्यकिरणाद् अशीति–प्रतिशतं लभ्यते। अतः शिशूनां देहे तैलमद्र्दनं कृत्वा प्रातः सूर्यातपे शयनस्य विधिर्वर्त्तते।

स्वस्थ शरीराय विटामिन्– डि इत्यस्य मात्रा– 30 mg इत्यतः 50 mg यावत् आवश्यकी भवति।

## विटामिन्–डि अभावस्य लक्षणम्–

विटामिन्–डि अभावेन शरीरे सुधा प्रस्तुता न भवति, येन शिशूना शारीरिकविकासो न भवति। वयस्कानां अष्टिओपरसिस् अथवा अष्टोपेनिआ सदृशाः रोगाः जायन्ते। शरीरे इन्सुलिनस्तरस्य नियन्त्रणं न भवति। गर्भधारणेऽपि कष्टं भवति।

गृहगतेन उपचारेण सुधायाः अभावस्य पूरणम–

१. चायं मध्ये आद्रकं सिद्धं कृत्वा पानम्।

२. जिरकं जलेन द्वादशघण्टां यावत् संस्थाप्य सिद्धं कृत्वा पानम्।

३. भर्जितं तिलं द्विचमसपरिमितम् अथवा लड्डुकं कृत्वा शून्य–उदरे भक्षणम्।

४. विटामिन्–डि युक्तं खाद्यपदार्थं जीवनचर्यायां

समायोजनम्।

५. पक्वम् अमृतभण्डां विटामिन्–सि युक्तत्वात् सुधायाः परिपूरणम् करोति।

६. दैनन्दिनम् एकं द्वयं वा सेओफलं सुधायाः अभावं पूरयति।

७. Green Tea अपि सुधायाः अभावं पूरयति। प्रतिदिनं विटामिन्–सि ग्रहणेन अपि शरीरम् सुधायाः ग्रहणे सहजसाध्यं भवति।

**विटामिन्–सि इत्यस्य मुख्यं स्रोतम्–**

१. मातुलुङ्गं, लिम्वुफलं, आमलकी, मौसुमी इत्यादयः १०० ग्राः इत्यतः ५० मि.ग्रा.

२. पालङ्गशाकम्– १०० ग्राः इत्यतः १५० मि.ग्रा.

३. शलगम्, विट्– १०० ग्राः इत्यतः १६० मि.ग्रा.

४. दधि– १०० ग्राः इत्यतः १२५ मि.ग्रा.

५. आलमण्डभूचणकम्– १०० ग्राः इत्यतः २६४ मि. ग्रा.

६. गोदुग्धम्–१०० ग्राः इत्यतः १५० मि.ग्रा.

**विटामिन्–डि इत्यस्य आधिक्येन शरीरस्यावस्था–**

आवश्यकतापेक्षया अधिकं विटामिन्–डि इत्यस्य ग्रहणेन वमनभावः (Calcium), वमनम्, ह्रदयस्य वृक्कस्य कार्ये वाधा इत्यादि लक्षणानि दृश्यन्ते।

शरीरे सुधायाः सममात्रापरिमाणम् भवति ८तः १०.५ भवति। एतस्मात् परिमाणाद् अधिकं भवति चेत् तस्य कारणानि निम्नप्रकारकाणि भवन्ति–

केचिद् रोगाः यथा फुसफुस् कर्कटरोगः, अधिकपरिमाणेन सुधायाः औषधं भक्षणम्, अधिकपरिमाणेन सुधायुक्तं खाद्यभक्षणम्, विटामिन्–डि इत्यस्य आधिक्यता, पाराथाइरड् ग्रन्थितोऽधिकस्रावश्च।

भारतवर्षे सुधायाः अभावयुक्तानां जनानां संख्या समुदायजनसंख्यायाः ७८ प्रतिशतम्। अस्याः सुधायाः अभावावस्थायां जनाः जीवनं यापयन्ति। परन्तु

यदा अत्यधिकभावेन अभावो भवति तदा तस्य लक्षणानि दृश्यन्ते। तदा तस्य चिकित्सायाः आवश्यकतास्ति।

**वयसानुसारं सुधायाः शरीरनिमित्तं परिमाणम्–**

१. प्राप्तवयस्कानां कृते प्रतिदिनं १०० मि. ग्रा. सुधायाः आवश्यकतास्ति।

२. पञ्चाशद् वर्षवयसाद् अधिकानां स्त्रीणां कृते तथा सप्ततिवर्षवयसाद् अधिकानां पुरुषाणां कृते प्रतिदिनं द्वादशशतं मि.ग्रा. परिमिताः सुधाः आवश्यकमस्ति। अतः तदनुसारं खाद्यम् औषधं च आवश्यकमस्ति।

३. जन्मनः षट्मासाभ्यन्तरे यस्य शिशोः वयसो भवति तस्य कृते प्रतिदनं सर्वनिम्नतया द्विशतं मि.ग्रा. परिमितं सुधायाः आवश्यकतास्ति। सप्तमासाद् द्वादशमासं यावत् २६० मि.ग्रा., १ वर्षात् ३ वर्ष यावत् ७०० मि.ग्रा., ४ वर्षं यावत् १००० मि.ग्रा. तथा ६ वर्षात् १८ वर्ष यावत् १३०० मि.ग्रा. सुधाः आवश्यकं भवति।

कानिचित् औषधीयद्रव्याणि येषु सुधायाः तथा अन्येषां पोषकतत्त्वानां परिमांण निम्नोक्तप्रकारणे अस्ति– यवानी–६ ग्राम् यवानी मध्ये ११५ मि.ग्रा. सुधा अस्ति। एतद्भिन्नं प्रोटीन्–फाइवर–जिङ्क–माङ्गानिज्–लौह–फास्फोरस् इत्यादयः तमक श्वासं (Bronchitis) दूरीकरोति। चर्मणः समस्यां दूरीकरोति। श्लेष्मा–रोगमपि उपशाम्यति। अस्थि दृढीकरोति। अस्थि–अन्तर्गतायाः मज्जायाः अभावमपि दूरीकरोति। तरुणास्थि (Cartilage) सृजने सहायतां करोति। शरीरे लोहितरक्तकणिकायाः संख्यां वर्द्धयति। रक्तस्य अभावं दूरीकरोति। रक्तस्य शर्करास्तरं नियन्त्रयति। शरीरे स्थितानां कृमीनां विनाशं करोति तथा शरीरे स्थितानां कोषाणां रक्षां करोति।

पोस्त (खस्खस्)– ६ ग्राम् खस्खस् (पोस्त) मध्ये १२६ मि.ग्रा. सुधा अस्ति। एतद् भिन्नं पोटैसिअम्–फाइवर–प्रोटीन्–लौह–ताम्र–जिङ्क–मैग्नेसिअम्– इत्यादयः बहुपरिमाणेन सन्ति। तथा च Fatty Acids, Essential Oils, Thiamim, Riboflarim, Niacin, Folic Acid इत्यादय अपि सन्ति।

खस्खस् शरीरे L.D.L. यत्तु एकं क्षतिकारकं कोलेष्ट्राल् इत्यादिकं

लघ्वीकरोति तथा H.D.L. कोलेष्ट्राल् इत्यादिकं वर्द्धयति। खस्खस् फरटिलिटि इत्यादिकं बर्द्धयति। अनिद्रां दूरीकरोति। अस्थीनि दृढीकरोति, पाचनशक्तिम् संवर्धयति, चक्षुनिमित्तं च हितकारकं भवति। Kedney Stone इत्यादिकं बहिः निष्कासयति। पुनश्च द्वितीयवारं न जायते। मुखे स्थितं ब्रणं दूरीकरोति। एतद् स्वाभाविकभावेन यन्त्रणानाशंकं भवति। थाइराइड् निमित्तं च उत्तमं भवति।

दधि–१०० ग्रा. दधि मध्ये १८० मि.ग्रा. सुधा अस्ति। दधिमध्ये पनिर् अपेक्षाया द्विगुणं सुधा (Calcium) अधिकं तिष्ठति। यदि कश्चित् एको जनः ५०० ग्रा. दधि खादति तर्हि एकस्मिन् दिवसे पूर्ण्णं ६०० मि.ग्रा. तः १००० मि.ग्रा. यावत् सुधा गृह्णाति। एतद्भिन्नं दधिमध्ये Protein, Phosphorus, Sodium, Riboflavin, Potassium इत्यादयः सन्ति। दधि हृद्रोगात् मुक्तं करोति। Osteoporosis रोगं न जनयति। Osteoporosis रोगे अस्थीनि दुर्वलानि जायन्ते। दधि शरीरस्य भारं बर्द्धयति। शिशोः जन्मनः पूर्वं गर्भस्य सर्वे रोगाः दूरीकरोति। रक्तचापं नियन्त्रयति। पाचनशक्तिं बर्द्धयति तथा रोगप्रतिरोधकशक्तिं वर्द्धयति।

बादाम (Almond) – १०० ग्रा. बादाममध्ये २६४ मि.ग्रा. सुधा (Calcium) अस्ति। एतद्भिन्नं Healthy Fats, Antioxidant, Minerals, Fivar, Protein, Vitamin (E) Manganise, Copper, Vitamin $B^2$ Phosphorus इत्यादयः सन्ति। बादामवल्कले एकप्रकारकं शक्तिपूर्ण्णं तत्त्वम् अस्ति यत्तु शरीरे स्थितानां कोषिकानां नष्टात् रक्षांकरोति। येन बार्द्धक्यं शीघ्र नागच्छति। अतो बादामं बल्कलेन साकं भोक्तव्यम् बादाममध्ये विटामिन् (इ) सर्वाधिकं विद्यते यत्तु हृद्रोगात् कर्कटरोगाच्च रक्षति। एतद् मुधमेह रोगमपि न्यूनं करोति। रक्तचापं कोलेष्ट्राल् इत्यादिकमपि न्यूनं करोति। ओजनह्रासकरणे अपि सहायकं भवति।

तिल (खसा)– ६ ग्रा. तिलमध्ये ८८ मि. ग्रा. सुधा अस्ति। एतद्भिन्नं Potacium, Diatary, Fiver, Protein, Copper, Vitamin $B^6$, Vitamin $B^1$, Vitamin $B^3$, Mangasium, Manganise, Zinc इत्यादयः सन्ति। एतद् हृद्रोगे, आमवाते, कोलेष्ट्राल् Tryglyceride तथा उच्चरक्तचापमपि न्यूनं

करोति। अस्थि दृढीकरोति। शरीरस्य शोथं दूरीकरोति। पचनकार्यं सुष्ठुकरोति। शरीरे नूतनकोषनिर्माणे सहायतां करोति। रक्तस्य शर्करां न्यूनं करोति। शरीरे रोगप्रतिरोधकं शक्तिं बर्द्धयति। सन्धौ जातां व्यथां दूरीकरोति। थाइराइड् निमित्तं एतद् हितकरं भवति। स्त्रीणां ऋतुस्रावस्य अन्तिमे शरीरे व्यतिक्रमजातानां Hormon Level सज्जीकरोति।

अतः समाजे प्रत्येकं वर्गस्य जनाः यथा धनी–दरिद्र–पुरुष–नारी–बालक–बालिका–गर्भवती–प्रसूति–इत्यादयः तथा त्रिंशत् वर्षवयसाद् अधिकः स्त्रीजनः चत्वारिंशत् वर्षवयसात् अधिकः पुरुषाश्च सुधायाः अभावं प्रति सचेतनाः भवेयुः। प्रत्येकं व्यक्तिः यदि तस्य जीवनशैल्यां दूरदृष्टिपूर्वंक सुधायाः ऊनाधिकं वा चिकित्सकस्य परामर्शानुसारं व्यवहरति तर्हि वयं स्वथाः स्थातुं शक्नुमः। वयं स्वथाः तिष्ठामः चेत् समाजः स्यादेव। समाजस्य सुस्थतायां सर्वें सुखिनो भवेयुः। अतो मनीषिभिः प्रोक्तम्–

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कचित् दुःखभाग्भवेत्।।**

**इति शम्।।**

*******

# आध्यात्मिकग़ज़लगीतिः

**डॉ० हर्षदेवमाधवः**

*८, राजतिलक बंगला, बोपल, अमदाबादम्*

(१)

(वृन्दावनम् अनुष्टुप्)

प्राणधर्मो मे भवेत् सम्मोहकं वृन्दावनम्।
दिव्यराधाकृष्णलीलाकामुकं वृन्दावनम्।।

यत्र भाषा मौनमास्ते, नो गतिर्मनसो भवेत्।
सख्यभक्तिकौतुकानां प्रेक्षकं वृन्दावनम्।।

किं नु क्लीबं निष्ठुरं तद् ब्रह्म ज्ञात्वा मे सुखम्?
यान्तु प्राणाः! भुक्तिमुक्त्याराधकं वृन्दावनम्।।

वञ्जुकुञ्जं वाग्, द्विरेफास्सर्वशब्दा मद्यपाः।
काव्यवंशीसङ्गीते मे गायकं वृन्दावनम्।।

विस्मृतास्संसारमर्यादाश्च व्यवहारा मया।
कामयेऽहं नीलब्रह्मोन्मादकं वृन्दावनम्।।

कोऽपि वृक्षो वायसो धेनुर्भवाम्यथ गोपिका।
मृत्युकालेषु भवेन्मे तारकं वृन्दावनम्।।

(२)

(घटः–शिखरिणी)

क्वचिन्मुग्धः कन्याशिरसि मुदितां धारयति घटः।
क्वचिद् वा योषाणां मदमविरलं कामयति घटः।।

सुधां, मद्यं, दुग्धं, मधुरमधुरं वारि विमलम्।
सदा पीत्वाऽतृप्तो भवमरुजले भ्रामयति घटः।।

निमग्नो भालोके द्युतितिमिरलीलापरिचितः ।
इदं मायावस्त्रं सुकृपयसा क्षालयति घटः ।।

सुधासिन्धोर्मध्ये विदितपरमो ज्ञानभरितः ।
सदा पूर्णः पूर्णं ह्यमृतचषकं पाययति घटः ।।

स्वगर्भस्थं तेजो गहनतिमिरे रक्षणक्षमः ।
घटाकाशे व्योम्नो द्युतिमचलितां पालयति घटः ।।

च्युतः क्रोधात् कामाद्, विगलितमतिः कर्मसु जडः ।
अधोऽधः पाताले पतति मनुजं पातयति घटः ।।

न क्षुद्रा वा तुच्छो विधिविरचितो विस्मययुतः ।
सखा संसाराब्धौ तरति विबुधं तारयति घटः ।।

(३)

(दीपः—मन्द्राक्रान्ता)

आवर्तेषु ह्यविचलगतिस्स्वं सदा पाति दीपः ।
नायात्यद्धा त्रिगुणरहितो नैव वा याति दीपः ।।

गाढे ध्वोन्ते न हि विचलितस्स्वस्थतेजस्तनोति ।
भालोकानां भुवनप्रथितस्स्वर्द्युतौ भाति दीपः ।।

पश्यन्त्येनं हृदयनिलये द्योतमानं हि धीराः ।
शुद्धो बुद्धो भवचितिमयः ह्यत्र पुष्पाति दीपाः ।।

तूष्णीं तूष्णीं प्रविशति गुहां ज्योतिषां ज्योतिरेकः ।
एकैवायं सकलभुवनं ह्योजसा माति दीपः ।।

संसारेऽस्मिन् तमसि पतिते यो हि जागर्ति नित्यम् ।
एको देवो जगति सकलं केवलं शास्ति दीपः ।।

आज्ञाचक्रेऽप्रतिहतगतिर्दिव्यलोकं प्रविष्टः ।
निस्स्नेहोऽयं द्युतिमनुपमां सौख्यदां राति दीपः ।।

दूरीभूतं गहनतिमिरं जन्मजन्मान्तराणाम्।
आत्माख्याने रहसि मधुरं मर्म व्याख्याति दीपः।।

(४)

(हंसः–शालिनी)

स्वान्तः क्लेशैर्दूयते नैव हंसः।
भावाभावैर्दुष्यते नैव हंसः।।

मुक्ताकाशे स्वैरयात्राऽस्ति मुक्त्यै।
कारागारै रूध्यते नैव हंसः।।

अब्धौ भातिर्मज्जनस्यापि नास्ति।
नौकाभिर्वा नीयते नैव हंसः।।

देवैर्नाब्धेर्लभ्यते मथ्यमानात्।
स्वर्वेश्याभिर्मोह्यते नैव हंसः।।

यूपे यूपे नित्यमुक्तं निबद्धम्।
कर्तुं यत्नैर्बध्यते नैव हंसः।।

ध्वान्ते गाढे नासदीये निगूढः।
वादालौके दृश्यते नैव हंसः।।

ब्रह्माण्डेऽस्मिन् तस्य दिव्या प्रतिष्ठा।
रूपाकारैर्वण्यते नैव हंसः।।

शास्त्राच्छास्त्रं ह्याश्रमादाश्रमञ्च।
भ्रामं भ्रामं गम्यते नैव हंसः।।

व्यर्था बाणाः पार्थ! ते लक्ष्यहीनाः।
हन्ता नायं हन्यते नैव हंसः।।

स्नायं स्नायं पुण्यश्लोकविस्त्रिण्याम्।
युक्तो नायं युज्यते नैव हंसः।।

शोकान्मुक्तः सच्चिदानन्दकामः।
मायाबन्धैः क्लिश्यते नैव हंसः।।

(५)

(आत्मन्—मन्दाक्रान्ता)

वर्णा दृष्टास्तव प्रतिपदं सर्वपुष्पेषु, आत्मन!
मूर्तौ मूर्तौ त्वमसि प्रसृतः पुण्यतीर्थेषु, आत्मन्।।

सूर्ये तेजो गिरिषु मधुरा निर्झराश्चन्द्रिका त्वम्।
सौन्दर्यं ते विलसति सखे् रम्यरूपेषु आत्मन्।।

वात्यासारेष्वविचलगतिस्त्वं सदा सुस्थिरोऽसि।
एकः पूर्णस्त्वमसि नितरां सर्वखण्डेषु आत्मन्।।

त्वद्भोगार्थं प्रकृतिमधुरा सृष्टिरेषा समग्रा।
बद्धः कस्माद् गणयसि मुधा सर्वपाशेषु, आत्मन्।।

शून्याकाशे, त्वमसि विपिने, रिक्तकूपे श्मशाने।
अस्तित्वानां विलयसमये नास्तिभावेषु, आत्मन्।।

यात्राकाले स्वजनरहिते शून्यगेहे मरौ वा।
त्वं दृष्टोऽसि ह्यनुपमसखे! रिक्तमार्गेषु आत्मन्।।

***

# महाभारते परिवेशचिन्तनसमीक्षणम्

**डॉ० अञ्जनदासः**

*सहाचार्यः, संस्कृतविभागः,*

*रामकृष्णमिशन्विद्यामन्दिरम्, बेलुडमठः,*

*हावडा, पश्चिमवङ्गप्रदेशः*

महर्षिकृष्णद्वैपायनवेदव्यासप्रणीतमनुष्टुब्बहुलछन्दोनिबद्धं कौरव–पाण्डवयोर्युद्धवर्णनपरमनेकाख्यानोपाख्यानात्मकं धर्म–अर्थ–काम–मोक्षविशदविवरणात्मकं परमादरणीयं महाकाव्यं हि महाभारतम्–

**''धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**

**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।।**[1]

वस्तुतस्तु महाभारतं न केवलं कुरुपाण्डवयोर्युद्धात्मकं महाकाव्यं, न वा मोक्षविषयात्मकम्; महाभारते विविधा विषयाः सविस्तरमालोचितास्तेषु अन्यतमो विषयो हि परिवेशचिन्तनम्। यद्यपि महाभारतं न परिवेशविज्ञानात्मको ग्रन्थः। तथाप्यत्र परिवेशविषये चिन्तनं विद्यते, तथाहि व्यासदेवैः सगर्वमीरितं 'यन्नेहास्ति न तत्क्वचित्' इति। अत्रेदमुल्लेखनीयं यदत्र प्रत्यक्षत्वेन किमपि परिवेशविषयकमन्तव्यं न प्राप्तम्, परन्तु परोक्षभावेन तैः सर्वं ग्रथितं ग्रन्थे; तद्धि चालनीन्यायेन वयमन्वेषणं करिष्यामः।

परिवेशस्योपादानस्वरूपो हि पञ्च महाभूताः (क्षितिः, अपः, तेजः वायुः, आकाशश्च)। प्राणीशरीरं हि पञ्चभूतमयम्, अपि च अस्य जगतः समस्तस्थावर–जङ्गमात्मकपदार्थो हि पञ्चभूतैर्निर्मितः–

**''चेष्टा वायुः खमाकाशमुष्माग्निः सलिलं द्रवः।**

**पृथिवी चात्र संङ्घातः शरीरं पाञ्चभौतिकम्।।**

**इत्येतैः पञ्चभिर्भूतैर्युयुक्तं स्थावरजङ्गमम्।।''**[2]

---

१. महाभारम् १/२/३६०

२. तदेव १८/१७८/४–५

अस्य पञ्चमहाभूतस्य माहात्म्यमालोचितं महाभारतस्य शान्तिपर्वणि। यत्र युधिष्ठिरेण भणितम्— 'कुतः सृष्टमिदं विश्वम्?' इति। अत्रेदं स्मरणीयं यद् वर्तमाने परिवेशेऽप्यस्य पञ्चमहाभूतस्य गुरुत्वमपरिसीमम्। वस्तुतस्तु परिवेशस्य रक्षणं हि पृथिव्यादीनां रक्षणं न हि अन्यम्।

ऋषिनये जगतोऽस्य सर्वं वस्तु यतः परमपुरुषात्सृष्टम् ततः प्रत्येकं वस्तुमध्ये ऐक्यमेकं विद्यते। अतः कदापि ऐक्यमिदं न विनष्टव्यम्। पृथिव्यां सर्वेषां प्राणिनां प्रयोजनीयतास्ति। यथा हिंसा परित्यजनीया इति महाभारतकारस्य मतम्—

**''अहिंसा सत्यवचनं सर्वभूतरहितं परम्।**
**अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः।।**[३]

**न हिंस्यात् सर्वभूतानि मैत्रायणगतिर्भवेत्।**
**नेदं जीवितमासाद्य वैरं कुर्वीत केनचित्।।**[४]

**अहिंसा परमो धर्मस्तथाहिंसा परं तपः।**
**अहिंसा परमं सत्यं यतो धर्मः प्रवर्तते।।**[५]

**सर्वभूतहिते तिष्ठ धर्मञ्चैव प्रतिस्मर।**[६]

पुनश्च वक्तुं शक्यते यन्महाभारते पार्थिवसम्पदः परिमितव्यवहारस्य कथापि प्राप्यते। वस्तुतस्तु प्रत्येकं प्रकृतिक्रोडे जायते म्रियते च। यावद्दिनं जायते तावत्पर्यन्तं प्रकृतेरुपादानं सङ्गृह्य जीवनधारणं क्रियते। परन्तु मानवाः प्रकृतेर्व्यवहारं परिमितत्वेन न कुर्वन्ति। विषयेऽस्मिन् युधिष्ठिरं प्रति भीष्मवचनं स्मरणीयम्—

**'ऊधश्छिन्दात्तु यो धेन्वाः क्षीरार्थीन् लभेत्पयः'**[७]

---

३. तदेव, वनपर्व / १७५ / ७३
४. तदेव, वनपर्व / १७६ / ३४
५. तदेव, अनुशासनपर्व १०० / ५४
६. तदेव, शान्तिपर्व १४७ / १६
७. तदेव, शान्तिपर्व ६६ / १७

अत एव केन रूपेण प्रकृतेर्व्यवहारः कर्तव्यः तदपि तेन भणितम्–

**''यो हि दोग्धीमुपास्ते च स नित्यं विन्दते पयः।**
**अथ राष्ट्रमुपायेन भुञ्जानो लभते फलम्।।**[८]

पार्थिवपरिवेशस्यान्यतमविशिष्टमुपादानं हि उद्भिदः। परन्तु उद्भिदसम्बन्धे मानवानां सचेतनताभावो भूयो भूयो दृश्यते। यथेच्छरूपेण वृक्षच्छेदनं तस्य निदर्शनम्। उद्भिदे प्राणस्यास्तित्वमस्ति इति कथा महाभारते हि आदौ उद्घोषितम्। शान्तिपर्वणो भृगुभरद्वाजसंवादे वृक्षे प्राणस्योपस्थितिः प्रमाणिता। अत्रोल्लेख्यं यदाचार्यैः जगदीशवसुमहाभागैः १६१० खीष्टाब्दस्य मई–मासस्य दशमदिनाङ्के 'Royal Society of London' इत्यस्य सभागृहे विज्ञानसाधकान् अभितः 'स्पिग्मोग्राफ्' इति यन्त्रेण वृक्षे प्राणस्यास्तित्वं प्रतिपादितमिति। वस्तुतोऽस्य आविष्कारस्यानुप्रेरणा हि महाभारतम्। यतस्तैर्महाभागैः विभिन्नभाषणे महाभारतस्य उद्धृतिः प्रदत्ताः तद्द्वारा वक्तुं शक्यते तथ्यमिदं महाभारतस्य प्रभावेन प्रभावितम्। अत एव दृश्यते महाभारते सिद्धान्तोऽयं पूर्वतया सिद्धः–

**''उष्मतो म्लायते पर्णं त्वक् फलं पुष्पमेव च।**
**ग्लायते शीर्य्यते चापि स्पर्शस्तेनात्र विद्यते।।**

**वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्य्यते।**
**श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः।।**

**वल्ली वेष्टयते वृक्षं सर्वतश्चैव व गच्छति।**
**नह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः।।**

**पुण्यापुण्यैस्तथागन्धैर्धूपैश्च विविधैरपि।**
**अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः।।**

---

८. तदेव, शान्तिपर्व ६६/१७

**पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात्।**
**व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे।।**
**सुखदुखयोश्च ग्रहणाच्छिन्नस्य च विरोहनात्।**
**जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते।।**[९]

महाभारते केवलमुद्भिदस्य चैतन्यं न घोषितम्। परिवेशरक्षणविषयेऽपि सूक्ष्मतया स्वमतमुपस्थापितम्। तत्रानुशासनपर्वणि युधिष्ठिर उवाच यत् स्थावरप्राणीनां जातयः षट् प्रकीर्त्तिताः वृक्षगुल्मलतावल्लीत्वक्सारतृणभेदेन। एतासां रोपणे कृते जगति कीर्त्तिलाभः परलोके च मङ्गलमयफलं प्राप्यते— **'कीर्त्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम्।'**[१०]। अत एव महाभारतकारस्य मतं हि वृक्षान् रोपयेत् इति। अत्रेदमवधेयं यद् वृक्षः रोपणकर्त्तुः पुत्रस्थानीयो भवति—

**'तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः'**[११] वस्तुतस्तु पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः।

पुनश्च, वृक्षस्य विनाशविषयेऽपि स्वमतमुपन्यस्तं महाभारतकारैः। तत्र एवमुल्लिखितं यद्योऽबुद्धिमान् अमावस्यायां कश्चिन्महावृक्षं विनष्टं करोति, अपि च तस्य वृक्षस्य एकमपि पर्णं यदि छिनत्ति स एव मानवो ब्रह्महत्यापापे लिप्तो भवेत्। वस्तुतस्तु परिवेशरक्षायां परिवेशबन्धुवृक्षसम्बन्धे एतादृशी भावना अन्यत्र दुर्लभम्। तदुक्तम्— 'यन्नेहास्ति तन्नास्ति कुत्रचित्' इति।

उद्भिदजगद्वत् प्राकृतिकपरिवेशस्यान्यतममुपादानं हि प्राणीजगत्। अस्य प्राणीजगतोऽन्यतमो वृहदंशो पशुपक्षीति। अन्यान्यशास्त्रमिव महाभारते बहूनां पशूनामल्लेखोऽस्ति। एषु गौ इति विशेष उल्लेखयोग्यः। वस्तुतस्तु महाभारतसमये समाजे गोपालनं विशेषत्वेन प्रचलितमासीत्। यथा दृश्यते यन्महाराजविराटस्य गोधनस्य ख्यातिरासीत्। अपि च, दुर्योधनोऽपि बहूनां

---

९. तदेव, शान्तिपर्व १७८/११—१७
१०. तदेव, अनुशासन/४७/२४
११. तदेव, अनुशासन/४७/२७

गोधनानामधिकारी आसीत् एवं वृत्तमपि महाभारतेऽस्ति। किञ्च दरीदृश्यते यत् दानेषु गोदानं श्रेष्ठमिति– **'न गोदानात्परं किञ्चिद्विद्यते वसुधाधिप'**[१२] पुनश्चोक्तमस्ति गोहिंसा गोहत्या गोमांसभोजनं गर्हितं कर्म इति। तदुक्तं–

**घातकः खादको वापि तथा यश्चानुमन्यते।**

**यावन्ति तस्य रोमाणि तावद्वर्षाणि मज्जति।।**[१३]

निष्कर्षरूपेण वक्तुं शक्यते यद् अर्वाचीनयुगे यदृच्छारूपेण परिवेशस्य ध्वंसो भवति तेन पृथिवी अतीव शीघ्रं विनष्टा भविष्यति। तस्मादस्माकं कर्तव्यमस्ति परिवेशरक्षणविषये चिन्तनम्। यत्तु महाभारतकालेऽपि कृतम्। तत्र वृक्षविनाशो ब्रह्महत्याक्षेषवत्प्रोक्तः–

**वनस्पतिञ्च यो हन्यादमावस्यायामबुद्धिमान्।**

**अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया।।**[१४]

महाभारते वृक्षरोपणार्थं उत्सासो प्रचुर प्रचोदनं कृतं यस्य फलस्वरूपं हि सुजला सुफला शस्यश्यामला इति भावना–

**पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान्।**

**वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र तु।।**[१५]

इत्थं वक्तुमिदं शक्यते यन् महाभारते परिवेशचिन्तनं सुष्ठु रूपेण विहितम् इत्यस्ति सर्वथा सिद्धम्।

***

---

१२. तदेव, अनुशासनपर्व ६१/२

१३. तदेव, अनुशासनपर्व ५६/६६

१४. तदेव, अनुशासनपर्व १०७/५२

१५. तदेव, अनुशासनपर्व ४७/३०

# आसनानामुपयोगिता मानवजीवने

**डॉ० सूर्यप्रकाशशुक्लः**

*असिस्टेण्ट प्रोफेसर–संस्कृत*

*राजकीयमहाविद्यालयः, पलिया कला, लखीमपुरखीरी (उ०प्र०)*

साम्प्रतं 'कोविड–१९' इत्याख्य विषाणुजनितेन 'कोरोना' इति नवीनरोगेण सम्पूर्णं विश्वम् आक्रान्तं विद्यते। आधुनिकविज्ञानस्य सर्वे चिकित्सकाः अनेन रोगेण भृशं चिन्तिताः यत्नशीलाश्च। ते तदपसारणोपायान्वेषणेऽहर्निशं निरताः सन्ति किन्त्विदानीं यावत् साफल्यं नाधिगतम्। अतो यावत्कालपर्यन्तमस्य सम्यगुपचारो नोपलभ्यते तावम् आसनानामभ्यासे सर्वैः दत्तावधानाः भवितव्याः। यतोहि सङ्कटकालेऽस्मिन् शरीरस्य सामर्थ्यसंवर्धनमेवोपायत्वेन मन्यते। केन प्रकारेण शरीरस्य सामर्थ्यं रोगप्रतिरोधकक्षमता च वर्धेत? एतदर्थमस्माकं ऋषिभिः महर्षिभिश्च पूर्वमेव चिन्तनं कृतमस्ति। तस्योपायत्वेन योगो विद्यते। किं नाम योगः? उक्तं च श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन–

**''योगः कर्मसु कौशलम्''**।[1]

अर्थात् कर्मसु कौशलमानेतुं योगस्य महती भूमिका वर्तते। अन्यच्च– **''समत्वं योग उच्यते''**।[2] योगस्याऽभिप्रायोऽस्ति स्वचेतनायाः उत वा स्व–अस्तित्वस्य बोधः विकासश्च। स्वान्तःकरणे निहितशक्तीनां विकासः कृत्वा परमचैतन्यस्य आत्मन साक्षात्कारः पूर्णानन्दावाप्तिश्च। एतत् प्राप्त्यर्थं नैकासां क्रियाणां विधानं भारतीयैः ऋषिभिः मुनिभिश्च कृतम्। महर्षिणा पतञ्जलिना स्वकीये योगसूत्रे ''अष्टाङ्गयोगः'' इति प्रतिपादितम्। यम–नियम–आसन–प्राणायाम–प्रत्याहार–धारणा–ध्यान–समाधयश्चेति अष्टाङ्गानि।

---

१. श्रीमद्भगवद्गीता–२/२०

२. तदेव–२/४८

३. योगसूत्रम्–२/४६

योगो भारतीयमनीषिभिः प्रवर्तिता एका प्राचीनतमा विद्या अस्ति। वर्तमानकालेऽस्य महती आवश्यकता विद्यते। योगान्तर्गतम् आसनानाम् उपादेयता प्रासङ्गिकता च सर्वथाऽपरिहार्या। अतः साम्प्रतिके काले आसनानां महतीम् उपादेयतां विचार्य तेषां विमर्शः विधीयते। प्रथमतस्तु मनसि प्रश्नः समूदेति यत् किमस्ति आसनम्? सन्दर्भेऽस्मिन् लिखति महर्षिः पतञ्जलिः योगसूत्रे–**''स्थिरसुखमासनम्''।**[३] पद्मासने, भद्रासने, सिद्धासने, सुखासने वा कस्मिंश्चिदपि आसने स्थैर्येण सुखेन च उपवेशनम् एव आसनं कथ्यते। साधकेन जपोपासनाध्यानार्थं च कस्मिंश्चिदपि आसने स्थैर्येण सुखेन च उपवेशनस्य सुदीर्घोऽभ्यासः करणीयः। आसनं तु योगाङ्गत्वेनैव भवति। आसनैः शरीरं सशक्तं, पुष्टं, बलिष्ठ, स्वस्थं, निरामयं च भवति। जीवनस्य सर्वेषां कार्याणां सम्पादनस्य मूले स्वास्थयमेव तिष्ठति। सम्यक् स्वास्थ्येन विना किमपि साधयितुं न शक्यते। अत आरोग्यविषये चरकसंहितायां सत्यमेवमुक्तम्– ''धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्''। संस्कृतसाहित्यस्य महान् कविः कविकुलगुरुः महाकविः कालिदासोऽपि आसनानां महार्घं महत्त्वमङ्गीकृत्य स्वकुमारसम्भवमहाकाव्ये एवं लिखति–

**''पर्यङ्कबन्धस्थिरपूर्वकायम्''।**[४]

अर्थाद् भगवान् शिवः शार्दूलचर्माच्छादितदेवदारुवृक्षेवदिकायां पर्यङ्कबन्धासने स्थित्वा समाधिस्थ आसीत्।

वस्तुतः शरीराय यथा भोजनमपेक्षते तथैव आसनान्यप्यावश्यकानि। आसनैः शरीरं सशक्तं भवति येन सामान्यतया शरीरे कोऽपि रोगो न सङ्क्रमते। आसनादिभिः आत्मबलमपि वर्द्धते। आत्मबलं वर्द्धिते सति आत्मविश्वासः स्वावलम्बनं च जागर्ति। आसनैः शरीरे तेजः, कान्तिः, स्निग्धता चाप्यायाति। शरीररक्षणाय शारीरिकश्रमः अतीव आवश्यकः। आसनैः श्रमसामर्थ्यम् आयाति। शरीररक्षणं सर्वदृष्ट्या अपरिहार्यम्। सन्दर्भेऽस्मिन् सुष्ठुमेव कथयति कविकुलगुरुः महाकविः कालिदासः कुमारसम्भव महाकाव्ये–

---

४. कुमारसम्भवम्–३/४५

**''शरीरमाद्यं खलु धर्मसाधनम्'' ।**[५]

स्वस्थे शरीरे रोगाः न वसन्ति। यदि कदाचिद् आगच्छन्त्यपि तर्हि आसनैस्तेषां निदानमपि सहजभावेन कर्तुं शक्यते। रोगेभ्य आत्मानं त्रातुम् उत वा तान् दूरीकर्तुं या शक्तिः अपेक्षिता भवति सा आसनानाम् अभ्यासेन लब्धुं शक्यते। यदा शरीरं पुष्टं निरामयं च भवति तदैव मन एकाग्रतामनुभवति। यदा शरीरं दुर्बलं भवति तदा मनसि स्थैर्यं नायाति। जगति सर्वेषु जनेषु सर्वाः शक्तयो विद्यमानाः सन्ति। योगासनानि अन्तःस्थिताः शक्तीः जनयन्ति।

केनप्रकारेण आसनविशेषेण शरीरस्य को भागः प्रभावितो भवति? किम् आसनं किमङ्ग प्रभावयति? कस्य आसनस्य को लाभः? इति धिया कतिपयानां प्रमुखनाम् आसनानां प्रभावा लाभाश्च प्रस्तूयन्तेऽत्र सङ्क्षेपेण।

**शीर्षासनम्–**

एतदासनं सर्वेषाम् आसनानां शीर्षस्थः अस्ति। आसनेनानेन रक्तशुद्धिः भवति येन शरीरस्य प्रधानाङ्गत्वेन मस्तिष्कः शुद्धरक्तं लभते। सम्पूर्णं शरीरम् आरोग्यं लब्ध्वा नवं नवम् उत्साहं स्फूर्तिं च आवहति। एतदासनं स्मृति, मेधां, धारणाशक्तिं च विकासयति। पाचनतन्त्रम् आमाशयम्, आन्त्रं, यकृतं च सक्रियं कृत्वा जठराग्निं वर्द्धयति। आन्त्रवृद्धि–आन्त्रशोथ–हिस्टीरिया–अण्डकोषवृद्धि –हार्निया–अजीर्णप्रभृतीन् रोगान् दूरीकरोति। स्वप्नदोषं, प्रमेहं, नपुंसकतां, वन्ध्यापनं च विनायति। मुखमण्डले ओजतेजसोः वृद्धिं करोति।

**सर्वाङ्गासनम्–**

एतादासनं सर्वं शरीरं प्रभावयति। अनेन आसनेन शरीरस्य सर्वाणि अङ्गानि सक्रियाणि भवन्ति। इदं सथैल्यं, दौर्बल्यम्, अनपेक्षितशरीरवृद्धिं, क्लान्तिं च रोधयति।

**उत्तानपादासनम्–**

आसनमिदम् गान्त्राणि सबलम् अनामयं च करोति। अजीर्ण मलावरोध–वति–पित्त–स्थौल्य प्रभृतीन् विकारान् दूरीकृत्य जठराग्निम् उत्तेजयति।

---

५. कुमारसम्भवम्–५/३३

**हलासनम्—**

आसनमेतद् अग्न्याशयं सक्रियं कृत्वा शर्करा अर्थात् डायबिटीज इति रोगापनयने साहाय्यं विदधाति। अजीर्ण—मन्दाग्नि—मलावरोध—तिल्ली—यकृतवृद्धि—हृदयरोगादिषु आसनमिदं लाभप्रदं विद्यते। कष्टार्तवादिषु स्त्रीरोगेष्वपि इदम् अतीव हितकरम्।

**पवनमुक्तासनम्—**

पवनमुक्तासनं यथा नाम तथा गुणः इत्युक्तिं चरितार्थयति। उदरस्य वायुविकारविनाशाय आसनमिदं बहूत्तमम्। अल्पार्तव—कष्टार्तवादिषु स्त्रीरोगसम्बन्धिविकारेष्वतीव लाभप्रदम्। अम्लपित्त— हृदयरोग—गठिया—कटिपीडाष्वपि सर्वथा हितावहम्। आसनमिदम् उदरस्य मेदावृद्धिं रोधयति येन शरीरे स्फूर्तिर्जायते।

**पद्मासनम्—**

पद्मासनं तु ध्यानाय सर्वोत्तममासनम्। एतद् वातरोगे लाभदायकं भूत्वा जठराग्निम् उत्तेजयति च। प्राचीनकाले न केवलं सामान्याः मानवाः अपितु तपोनिष्ठाः ऋषयः मुनयश्चापि आसनेऽस्मिन् स्थित्वा ध्यानमग्नाः भवन्ति स्म। किं बहुना देवा देव्यः अपि आसनमिदम् अङ्गीकृत्य उपविशन्ति स्म। विद्यायाः अधिष्ठात्री देवी सरस्वती पद्मासने विराजते। आसनमिदं मनसः चाञ्चल्यं दूरीकृत्य ध्यानाय स्थिरतां नयति।

**वज्रासनम्—**

अद्यत्वे व्यस्ततमे युगे जनानां पार्श्वे भोजनाय अपि पर्याप्तसमयः नास्ति। ते येन केन प्रकारेण कस्मिश्चिदपि काले भोजनं गृह्णन्ति। यस्मात् कारणाद् भोजनम् उदरे सम्यग्रूपेण न पचति। तेन नैके उदरसम्बन्धिरोगाः उत्पद्यन्ते। आसनमिदम् अपचन—अम्लपित्त—गैस—मलावरोधादिषु उदरसम्बन्धिरोगेष्वतीव लाभदायकम्। केवलमिदमेव एकमीदृशमासनं यद् भोजनानन्तरं क्रियते। भोजनानन्तरं पञ्चतः पञ्चदशनिमेषपर्यन्तं वज्रासने उपवेशनेन भोजनस्य पाचनं स्मयग्रूपेण भवति। एतदासनं प्रतिदिनं पञ्चनिमेषपर्यन्तं तु सर्वेषां कृते स्वास्थ्यलाभाय अनिवार्यत्वेन करणीयमेव।

**शशकासनम्–**

आसनमिदं हृदयरोगिणां जनानां कृते सर्वथा हितकरम्। आन्त्र–यकृत–अग्न्याशय–वृक्कप्रभृतीन् अङ्गान् शक्ति प्रददाति येन तत्तद् अङ्गानां कार्यक्षमता वर्द्धते। मनोरोग–क्रोध–मनः अशान्ति–मानसिकोद्वेगादीन् विकारान् अपनयति, मनः शान्तिं करोति हि आसननिदम् स्त्रीणां गर्भाशयं पुष्णाति च।

**मण्डूकासनम्–**

एतदासनम् अग्न्याशयं सक्रियतां नयति येन 'इन्सुलिन' इति पदार्थः निर्माति। अतः शर्करारोगं दूरीकर्तुं साहाय्यं करोति। एतद् उदररोगेषु लाभदायकं हृदयस्य कृते हितावहं च भवति।

**वक्रासनम्–**

वक्रासनस्य नियमिताभ्यासेन कटिप्रदेशस्य स्थौल्यम् अपनीयते। आसनमिदं यकृत–तिल्ली इत्यनयोः कृते पथ्यं भवति।

**गोमुखासनम्–**

आसनमिदं यकृतवृक्कवक्षस्थलान् बलवत्तारं करोति। सन्धिवातादिरोगान् अपनयति च। अण्डकोषवृद्धौ आन्त्रवृद्धौ च विशेषेण लाभप्रदम्। धातुरोगे, बहुमूत्रे, स्त्रीरोगेषु, चापि हितावहम् भवतीदमासनम्।

**भुजङ्गासनम्–**

मेरुदण्डं शरीराय सर्वाधिकं महत्त्वपूर्णभिङ्गं विद्यते। अस्यैव बलेन सर्वं शरीरं सारल्येन सञ्चाल्यते। मेरुदण्डस्य कृते भुजङ्गासनम् अतीव आवश्यकं हितकरं च भवति। अनेन आसनेन मेरुदण्डं पुष्टं सशक्तं च भवति।

**धनुरासनम्–**

आसनमिदं मेरुदण्डं नमनीयं स्वस्थं च करोतिं सर्वाइकल–स्पाण्डलाइटिस–कटिपीडा–उदररोगेषु सर्वथा लाभदायकमिदमासनम्। स्त्रीणां मासिकधर्मसम्बन्धिविकृतिष्वपि लाभप्रदम्। एतदासनं वृक्कान् पुष्णाति मूत्रविकारान् च दूरीकरोति। भयकारणात् सञ्जायमाने मूत्रस्रावावरोधनेऽपि हितकरम् मिदमासनम्।

**उष्ट्रासनम्–**

उष्ट्रासनं श्वसनतन्त्राय अतीव हितावहम्। अनेन फुफ्फुसप्रकोष्ठाः सक्रियाः भवन्ति येन श्वासरोगिणः स्वास्थ्यलाभम् अनुभवन्ति। एतन् मेरुदण्डं नैकेभ्यो रोगेभ्यो निवारयति। 'थायरॉइड' इत्यस्य कृतेऽपि सुखावहम्।

**सूर्यनमस्कारासनम्–**

वस्तुतः सूर्यरश्मयो जीवनशक्तिं प्रददति। सूर्यस्नानेन टायफाइड–यक्ष्मादिरोगाः दूरं गच्छन्ति। समेषां प्राणिनां जीवने सूर्यस्य सर्वाधिकं महत्त्वं विद्यते। अनेनैव कारणेन सूर्यः स्थावरजङ्गमपदार्थानामात्मा कथितः यजुर्वेदे– ''सूर्य आत्मा जगतस्तस्थुषश्च।

एकमेव सूर्यनमस्कारासनं समेषाम् अङ्गनां कृते लाभप्रदं भवति यतः आसनेनानेन सम्पूर्णशरीरस्य व्यायामः सम्पद्यते। सूर्यनमस्कारेण सम्पूर्णं शरीरम् आरोग्यं शक्तिं स्फूर्तिम्, ऊर्जा च लभते। अनेनाङ्गप्रत्यङ्गेषु सक्रियता सम्प्रबर्धते। शरीरस्य सर्वासाम् आन्तरिकग्रन्थीनाम् अन्तःस्रावप्रक्रिया च नियम्यते। संक्षेपेणेदं वक्तुं शक्यते यत् सूर्यनमस्कार एकः पूर्णो व्यायामः अस्ति। अनेन उदर–आन्त्र–आमाशय–अग्न्याशय–हृदय–फुफ्फसादीनि अङ्गानि निरामयानि शक्तिसंवलितानि च भवन्ति। उदिते सूर्ये आसनस्यास्य नियमिताभ्यासेन शरीरं कान्तियुक्तं भवति। ओजतेजसोः वृद्धिश्च जायते।

प्रायशो नाम्नैवासनानां स्वरूपं ज्ञायते। अस्माकम् ऋषयो मुनयश्च अतीव सूक्ष्मदर्शिन आसन्। तैर्न केवलम् आध्यात्मिकचिन्तनमेव कृतम् अपितु शारीरिकस्वास्थ्यविषयेऽपि गभीरमनुसन्धानं कृतमस्ति। येषु येषु पशुषु पक्षिषु वा ये ये गुणाः निलीनाः सन्ति तान् एव मनसि निधाय तद् तद् आसनानां नामकरणं कृतम्। यथा– शशकासनं, गोमुखासनम्, उष्ट्रासनं, मयूरासनं, वकासनं गरुडासनादीनि। तद् तद् आसनानाम् अभ्यासेन शरीरं स्वस्थतां प्राप्नोति। एतेषामासनानामाभ्यासेन आश्रयेण व्यवहारेण वा शरीरे स्फूर्तिः स्निग्धता कान्तिः ओजः तेजः उत्साहः पुष्टिः आत्मबलम् आत्मनिर्भरता रोगप्रतिरोधकक्षमता च सारल्येन आयाति। एवं प्रकारेण जीवने आसनानां महत्ता उपादेयता च सुतरां सुप्रतिष्ठिता दरीदृश्यते।



# शब्दशक्तिप्रकाशिकादिशा अपत्यार्थतद्धितप्रत्ययार्थविमर्शः

**डॉ. सन्तुसिंहः**
*सहायकाध्यापकः, संस्कृतविभागः*
*बाँकुडाविश्वविद्यालयः, पश्चिमवङ्गप्रदेशः*

पाणिनिसूत्रानुसारम् अपत्याधिकारे उत्सर्गतया अण्प्रत्ययं विधाय तद्बाधकभूतानां प्रत्ययानां प्रतिपादनं यथा कृतं दृश्यते तथा जगदीशभट्टैरपि बाध्यबाधकभावो निरूपितः। तत्र तर्कालङ्कारैः तद्धितलक्षणं निरूप्य तद्भेदाः प्रतिपादिताः। तन्नये विभक्तिधात्वंशकृद्भिन्नः प्रत्ययो हि तद्धितप्रत्ययः –**विभक्त्यादित्राकदन्यः प्रत्ययस्तद्धितं मतम्।**[1] इति। तैस्तद्धितस्त्रिधा प्रोक्तः अपत्यार्थक–चातुरार्थिक–शैषिकभेदात्। अतः प्रकृतशोधपत्रे मया जगदीशानुसारम् अपत्यार्थतद्धितार्थविचार उपस्थापितः। अधश्चैतत्सर्वं यथामति निरूप्यते –

**जगदीशदिशा अपत्यार्थकस्य अण्–प्रत्ययस्य विधानम्–**

जगदीशनये षष्ठ्यन्तात् नाम्नः अपत्यसामान्ये वाच्ये अण् इति उत्सर्गतया विधीयते। यथा मरीचेरपत्यं मारीच इति। अपत्यविशेषे तु भिन्नस्तद्धितप्रत्ययो भवतीति जगदीशनयः। तथाहि तैरु उक्तम्– **षष्ठ्यन्तान्नाम्नः साक्षात्परम्परयासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः**[2] इति। **कातन्त्रसूत्रम्–अण्णपत्ये शिवादिभ्यः**[3] इति। पाणिनीयं सूत्रम्–**तस्यापत्यम्**[4] इति।

---

१. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका ४५१ पृष्ठाङ्के
२. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका ४५२ पृष्ठाङ्के
३. कातन्त्रतद्धितपरिशिष्टम् सूत्रसंख्या १
४. अष्टाध्यायी ४.१.९५

## जगदीशदिशा अपत्यार्थकस्य अण्–प्रत्ययस्य बाधकशास्त्राणां विधानम्–

### अण्–प्रत्ययापवादस्य इणः विधानम्–

जगदीशनये अदन्तात् नाम्नः अण्–प्रत्ययं प्रबाध्य इञ्–प्रत्ययो विधीयते। यथा दक्षस्य अपत्यं पुमान् दाक्षिः। किञ्च, जगदीशमते निषादेः अपत्यम् इत्यत्र निषाद–नाम्नः अपत्यबोधनार्थं विहिते अपि इण्–प्रत्यये अन्तिमाचः अक् इत्यादेशो भवतीति निषादस्य अपत्यं नैषादकिः, व्यासस्य अपत्यं वैयासकिः, चण्डालस्य अपत्यं चाण्डालकिः इत्यादीनि रूपाणि सिद्धानि भवन्ति। तथाहि उक्तम्–**अदन्तान्नाम्नो बाधकं विना इणेव, दक्षस्य अपत्यं दाक्षिः।**[५] इति। उक्ता च कारिका–

> **अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्तादबाधकं विना।**
> **अदन्तादिण् निषादादेरन्त्याचोऽक् चेण्णपेक्षितः।।**[६] इति।

पाणिनिनात्र इञ्–प्रत्ययस्य विधानं कृतम् **अत इञ्**[७] इति सूत्रेण।

### अण्–प्रत्ययस्य अपवादान्तरविधानम्–

जगदीशमते स्त्रीप्रत्ययान्ताद् नाम्नः अपत्यार्थे अण्–प्रत्ययं प्रबाध्य एयण् इति विधीयते। यथा विनताया अपत्यं वैनतेयः, सौपर्ण्याः अपत्यं सौपर्णेयः, कमण्डल्याः अपत्यं कामण्डलेयः, युवत्या अपत्यं यौवतेयः इत्यादि। अत्र च पाणिनीयं सूत्रं **स्त्रीभ्यो ढक्**[८] इति, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[९] इति च बोध्यम्। क्वचित् पारिभाषिकात् द्विस्वरविशिष्टात् अप्रत्ययेदन्तादपि एयण् अपत्यार्थे विधीयते इति जागदीशमतम्। यथा अत्रेरपत्यम् आत्रेयः, अग्नेरपत्यम् आग्नेयः इत्यादि। तथाहि जगदीशैरुक्तम्–**स्त्रीप्रत्ययान्तादत्र्यादेरप्येण् पारिभाषिकात्**[१०] इति।

---

५. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५१ पृष्ठाङ्के
६. तत्रैव
७. अष्टाध्यायी ४.१.९५
८. तदेव ४.१.१२०
९. तदेव ७.१.२
१०. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका ४५४ पृष्ठाङ्के

ततश्च जगदीशैः द्विस्वरपदस्य अप्रत्ययेदनन्तपदस्य च व्यावृत्तिरपि दर्शिता। तथाहि मरीचेरपत्यम् इत्यर्थे अण् एव, न तु एयण् मरीचिपदस्य अप्रत्ययेदन्तत्वे अपि द्विस्वराभावात्। तथा च, विधेरपत्यम् इत्यर्थे अण् एव, न तु एयण् विधिपदस्य द्विस्वरत्वे अपि अप्रत्ययेदन्तत्वाभावात्। तथाहि उक्तम्– **विध्यादिकं द्विस्वरमपि नाप्रत्ययेदन्तम्। मरीच्यादिकमप्रत्ययेदन्तमपि न द्विस्वरमतो वैधो मारीच इत्यादौ न प्रसङ्गः।**[११] इति।

आदिवृद्धिविशिष्टादेव स्त्रीप्रत्ययान्ताद् नदी–मानुषीनाम्नः एयण्। यथा–द्रौपद्या अपत्यं द्रौपदेयः, जाह्नव्या अपत्यं जाह्नवेय इत्यादि। किन्तु, स्त्रीप्रत्ययान्तादपि आदिवृद्धिविरहात् नदी–मानुषीनाम्नः न एयण्, अण् एव। यथा–यमुनाया अपत्यं यामुनः, सरस्वत्या अपत्यं सारस्वत इत्यादि। तथाहि उक्तम्–**न नदीमानुषीनाम्न आदावादवृद्धिवर्जितात् इति। अस्मिन् प्रसङ्गे कातन्त्रीयं सूत्रं–आदावाद्बृद्धिवर्जितात्**[१२] तटीनीमानुषीनाम्न एयण् इति। पाणिनीयम् अनुशासनं–**तद्धितेष्वचामादेः**[१४] इति, **अवृद्धाभ्यो नदीमानुषीभ्यस्तत्रामिकाभ्य**[१५] इति च।

जगदीशमते सुभगादिनाम्नः अपत्यार्थे एयणि कृते अन्त्यस्वरस्य नित्यमिनादेशो भवति। तेन सुभगाया अपत्यं सौभागिनेयः, दुर्भगाया अपत्यं दौर्भागिनेय इत्यादि। तथाहि उक्तम्–**सुभगाप्रभृतेरेयण्यन्त्यस्वरस्य नित्यमिनादेशः, यथा सुभगाया अपत्यमित्यर्थे सौभागिनेयः, दौर्भगागिनेयः, पारस्त्रैणेय इत्यादौ।**[१६] इति।

एवञ्च, कुलटा स्त्री चेत्सती तदा एयणि विकल्पे इनादेशः। यथा–कुलटायाः (सत्याः) अपत्यं कौलटिनेयः इति। कुलटा असती चेत्तदा न इनादेशः भवति। यथा कुलटायाः (असत्याः) अपत्यं कौलटेय इति। तथाहि

---

११. तत्रैव

१२. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५४ पृष्ठाङ्के

१३. कातन्त्रतद्धितपरिशिष्टे सूत्रसंख्या १६

१४. अष्टाध्यायी ७.२.११७

१५. तदेव ४.१.११३

१६. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५४ पृष्ठाङ्के

उक्तं जगदीशैः– **कुलटा तु यदि सती तदा तदन्त्यस्वरस्यैयणि विभाषया इनादेशः, यथा कौलटिनेय इत्यादौ, यदि त्वसती तदा कौलटेय इत्येव प्रयोगः।**[१७] इति। कारिकया इदं सर्वं सङ्गृहीतम्– **सुभगादेरिनादेशो–ऽप्यन्त्यस्यैयणि नित्यशः। कुलटाया विकल्पेन सती यदि भवत्यसौ।।**[१८] इति।

अस्मिन् प्रसङ्गे कातन्त्रीयं सूत्र्–**अन्त्यस्वरस्य च**[१९] इति, **सुभदेरनिदेशः कुलटायास्तु तत्र वा**[२०] इति च। पाणिनीयं सूत्रं च –**हृद्भगसिन्ध्वन्ते पूर्वपदस्य च**[२१] इति, **कुलटाया वा**[२२] इति च।

शीलहीनवाचकाद् अङ्गहीनवाचकात् स्त्रीप्रत्ययान्तात् शब्दाद् विकल्पेन एरण्प्रत्ययो भवति। पक्षे तु एयण् भवति। यथा दास्या अपत्यं दासेयः, दासेरः इति। काणाया अपत्यं काणेयः, काणेर इति। अङ्गहीनायाः कुलटायाः अपत्यम् इत्यर्थे कौलटेरः, कौलटेय इति। तथाहि जगदीशैरुक्तम्–**शीलेन हीनानां दास्यादीनाम्, अङ्गेन हीनानां काणादीनाञ्च स्त्रीप्रत्ययान्तामेरण् वा स्यात। यथा दास्या अपत्यं दासेयः, दासेरः। यथा या काणाया अपत्यं काणेयः, काणेरः। कुलटाप्यङ्गहीना चेत् कौलटेर**[२३] इति। कातन्त्रव्याकरणे सूत्रं सूत्रितम्– **स्त्रीप्रत्ययान्तात् शीलाङ्गहीनादेरण् विभाषया**[२४] इति।

**आयनिण्–प्रत्ययः**

अपत्यर्थे तिकादिशब्दात् आयनिण्–प्रत्ययः। तिकस्य अपत्यमित्यर्थे तैकायनिः, कौशलस्य अपत्यं कौशल्यायनिः। एवञ्च, तदादि–सर्वनाम्नः अपत्यार्थे अयनिण्–प्रत्ययः विकल्पे विधीयते इति जागदीशमतम्। तेन पक्षे

---

१७. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५५ पृष्ठाङ्के

१८. तत्रैव

१९. कातन्त्रतद्धितपरिशिष्टे सूत्रसंख्या २०

२०. कातन्त्रतद्धितपरिशिष्टे सूत्रसंख्या २०

२१. अष्टाध्यायी ७.३.१७

२२. तदेव ४.१.१२७

२३. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५५ पृष्ठाङ्के

२४. कातन्त्रतद्धितपरिशिष्टे सूत्रसंख्या २८

तदादिशब्दात् अणपि भवति। यथा तस्य अपत्यं तादायनिः, तादः। तथाहि जगदीशैः उक्तम्— **तिकस्यापत्यमित्यर्थे नित्यमायनिण्। यथा तैकायनिः, कौशल्यायनिरित्यादौ, कौशल्यायनिवल्लभामिति भट्टिः। स च तदादेः सर्वनाम्नो वैकल्पिकः। यथा तस्यापत्यमित्याद्यर्थे तादायनिः, तादः, तादेयः इति। कारिकयापि उक्तं तेन— तिकादेरायनिण् नित्यं तदादेस्तु विभाषया।**[२५] इति।। कातन्त्रं च सूत्रम्—**तिकादेरायणिन् स्मृतः**[२६] इति।

स्वसृशब्दाद् अपत्यार्थे ईय—प्रत्ययः। तेन स्वसुरपत्यमित्यर्थे स्वस्त्रीयः, भ्रातुरपत्यमित्यर्थे ईयप्रत्ययः व्यप्रत्ययश्च विधीयेते। तेन भ्रात्रीयः, भ्रातृव्य इति रूपद्वयम्। श्वसुरस्यापत्यमित्यर्थे तु यप्रत्ययो विधीयते। तेन श्वसुरस्यापत्यमित्यर्थे श्वशुर्य इति रूपम् इति जागदीशनयः— **ईयः स्वसुः स च व्यश्च भ्रातुर्यः श्वशुराद्भवेत्।**[२७] इति।

**एयकण्—य—प्रत्ययः**

जगदीशमते कालशब्दाद् अपत्यार्थे एयकण्—य—प्रत्ययौ स्तः। यथा कुलस्य अपत्यं कौलयेकः, कुल्य इति। किञ्च, अन्यपदपूर्वात् अथवा केवलात् कुलशब्दात् अपत्यार्थे ईन—प्रत्ययः स्यात्। यथा—कुलस्य अपत्यं कुलीनः, आढ्यकुलस्य अपत्यम् आढ्यकुलीनः इति। किन्तु अपत्यार्थे महाकुलशब्दात् ईणन्—अण्—प्रत्ययौ तथा दुष्कुलशब्दात् एयण्—प्रत्ययश्च भवन्ति। यथा महाकुलीनः, महाकुलः, दौष्कलेयः इत्यादि। तथाहि उक्तम्— **कुलाद्य एयकण्णीनः सपूर्वात् केवलादपि।**[२८] इति।

महाकुलादणीनण् च दुष्कुलादेयणो विधिः।। इति। कातन्त्रं च सूत्रमत्र— **कुलशब्दादेयकण्—यौ स्यादीनः केवलादपि**[२९] इति, **तथा स्याद्दुष्कुलादेयण्**[३०] इति च।

---

२५. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५५ पृष्ठाङ्के
२६. कातन्त्रतद्धितपरिशिष्टे, सूत्रसंख्या ३४
२७. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५५ पृष्ठाङ्के
२८. ढुण्ढिराजशास्त्रिसम्पादितशब्दशक्तिप्रकाशिका, ४५६ पृष्ठाङ्के
२९. कातन्त्रतद्धितपरिशिष्टे, सूत्रसंख्या ४३
३०. कातन्त्रतद्धितपरिशिष्टे, सूत्रसंख्या ४४

**उपसंहारः–**

यथा सुपामर्था लकाराणां चार्था जगदीशतर्कालङ्कारैर्निरूपितास्तथा तद्धितानामप्यर्थाः प्रतिपादिताः। परमत्रायं विशेषो यद् यथा पाणिनिना अपत्यार्थतद्धितवेलायां प्रतिबध्यप्रतिबन्धकभावो दर्शितस्तथा तर्कालङ्कारैरपि अपत्यार्थतद्धितविवेचनवेलायां प्रतिबध्यप्रतिबन्धकभाव आश्रितः। तत्रापि चायं विशेषो यत् जगदीशतर्कालङ्कारैस्तद्धितप्रत्ययनिरूपणे कातन्त्र–व्याकरणप्रत्ययाः दर्शिताः। प्रबन्धे मया जगदीशोक्तप्रत्यय व्याख्यानवेलायां यथा कातन्त्रीयं सूत्रं तथा पाणिनीयसूत्रम् उद्धृत्य तुलनात्मकमध्ययनमपि। तथा च, तैः अण्–प्रत्ययमुत्सर्गतया विधाय तद्बाधकत्वेन कातन्त्रोक्तानाम् इण्–एयण्–एरण्–आयनिण्–एयकण्– य– प्रत्ययानां विधानम् उक्तम्।



# यजुर्वेदे रुद्रस्य शिवस्वरूपवर्णनम्

**डॉ. विनोदकुमारः**

*सह–आचार्यः, संस्कृत–पालि–प्राकृत–प्राच्यभाषाविभागः,*

*इलाहाबादविश्वविद्यालयः, प्रयागराजः*

भारतीयसंस्कृतौ विद्यमानं देवानां महत्त्वं विश्वप्रसिद्धं सर्वैर्विदितमेव च। वेदेषु ऋषिभिः येषां स्तुतिः विहिताः ते देवाः कथ्यन्ते **'तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते'।**[1] **'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा'**[2] इति निरुक्तपरिभाषानुसारं ये ददति प्रकाशिताः वा भवन्ति द्युलोके वा स्थिताः सन्ति ते देवाः कथ्यन्ते। इत्थं यास्काचार्यो वेदेषु देवतानां सङ्ख्याः तिस्र एव स्वीकरोति–पृथ्वीस्थानीयाः द्युस्थानीयाः अन्तरिक्षस्थानीयाश्चेति।[3] वेदेषु ये विभिन्ननामानः अनेके देवाः स्तूयन्ते त एतासु त्रिषु श्रेणिष्वेवान्तर्भूताः। इह एकस्यैव परमात्मनः सामर्थ्यं कार्यस्वरूपञ्चाश्रित्य नानानामानि श्रूयन्ते। ऋग्वेदे एव एकस्मिन्स्थाने देवतानां संख्या त्रयस्त्रिंशदपि उच्यते। तत्र विश्वामित्रर्षिः अग्निं स्तुवन् प्रार्थयते यद् हे अग्निदेव! अस्माकमध्वरे भवान् सपत्नीकान् त्रयस्त्रिंशद्देवान् आनयतु।[4] वेदेषु देवाः इतोऽप्यधिकाः दरीदृश्यन्ते। अपरस्मिन्सूक्ते सैव विश्वामित्रर्षिः कथयति यत् नवत्रिंशदधिकत्रिशतोत्तरत्रिसहस्रैः देवैः अग्निदेवस्य स्तुतिः विहिता।[5] परमुल्लेखनीयं यद् वैदिककाले देवानां मानवीकरणं नाभवत्। त्रयस्त्रिंशदथवा इतोऽप्यधिकाः देवाः के के आसन्निति तत्र वर्गीकरणं न प्राप्यते। परन्तु शनैः शनैः ब्राह्मणकाले देवानां मानवीकरणमारब्धम्। शतपथब्राह्मणे त्रयस्त्रिंशद्देवतानां नाम्नां सूची प्राप्यते।[6]

---

१. निरुक्तम् ७/१

२. तदेव ७/१५

३. तदेव ७/१५

४. ऋग्वेद, ३/६/६

५. तदेव ३/६/६

६. शतपथब्राह्मणम्, १४/६/३/५

अत्र अष्टवसूनामेकादशरुद्राणां द्वादशादित्यानां चेन्द्रप्रजापतिसहितं नामान्युल्लिखितानि। ब्राह्मणकालादारभ्य उपनिषत्कालपर्यन्तमपि देवानां मानवीकरणं सर्वथा न सञ्जातम्। परञ्च कालान्तरं पौराणिककाले देवानां चरित्रगताः विशेषताः समाश्रित्य सम्यक्तया मानवीकरणमभवत्। अपि च वेदेषु ये त्रयस्त्रिंशत् कोट्यः (प्राकारकाः) देवताः आसन् ते अत्र त्रयस्त्रिंशत्कोटिसङ्ख्यापरिमिताः स्वीकृताः। किञ्च एतेष्वपि ब्रह्मा–विष्णु–महेशाः एते त्रयो देवाः अतिप्रमुखाः मताः येऽत्र क्रमशः सृष्ट्युत्पत्तिस्थितिप्रलयप्रवर्त्तकाः वर्त्तन्ते। यद्यपि दार्शनिकदृष्ट्या एक एव परमदेवः वर्त्तते **'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा'।**[७] स एव नानाशक्तिसामर्थ्याद् बहुभिः नामभिः व्यवह्रियते। यथोक्तं वेदे **'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः'।**[८] शिवोऽपि तस्यैव परमदेवस्य सञ्ज्ञास्ति। परमात्मा समेषां जनानां शिवम् अर्थात् कल्याणं करोति अतः स शिव उच्यते। शिवस्यैव नीललोहित–शङ्कर–रुद्र–कपर्दी–नीलकण्ठ–शम्भु–आशुतोष–त्र्यम्बक इत्यादीनि नैकानि नामानि जनसाधारणमध्ये प्रचलितानि सन्ति।

इत्थमत्रोल्लेखनीयं यत् पुरा वेदेषु एकस्यैव परमतत्त्वस्य स्थापना आसीत् किन्तु कालान्तरं यदेयं भावना पराकाष्ठां प्राप्नोत् तदा नानादेवतानां कल्पना समुद्भवत्। एतेष्वपि देवेषु यः प्राचीनतमः स देवो रुद्रः ऋग्वेदे स्मर्यते। यद्यपि ऋग्वैदिककालेऽयं देवः अत्यधिकः प्रतिष्ठितो नासीत्। तज्ज्ञायते ऋग्वेदे केवलं त्रीण्येव सूक्तानि रुद्रदेवस्य स्तुतौ प्राप्यन्ते।[९] किन्तु यजुर्वेदे अस्य रुद्रदेवस्य वर्णनं पर्याप्तं दरीदृश्यते। ऋग्वेदे रुद्रस्य स्वरूपं ईदृशं वर्णितं यत् स भयङ्करः अस्ति झञ्झावातस्य च प्रतीको मन्वते। तस्य वर्णः प्रायो बभ्रुः कदाचिच्च श्वेतः सुवर्णश्च दृश्यते। स भिषजां पतिः मरुतां पिता मनुष्याणां पशूनां च संहर्त्ता स्मर्यते।[१०] ऋग्वेदस्य उपर्युक्तं स्वरूपमादायैव अयं रुद्रदेवो यजुर्वेदे त्र्यम्बकरूपे प्रतिष्ठितो भवति– अवरुद्रमदीमह्यव देवं

---

७. श्वेताश्वतरोपनिषद्, ६/११

८. ऋग्वेदः, १/१६४/४६

९. तदेव, १/१२४, २/३३, ७/४६

१०. तदेव, म. २, सू. ३३, मं. १० एवम् म. ७, सू. ४६, मं. १।

त्र्यम्बकम्। यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात्।।

अत्र रुद्रदेवः स्पष्टं त्र्यम्बकशब्देन विशेष्यते। उत्तमसुखानां प्राप्तये श्रेयसाप्तये च तस्मात् प्रार्थना क्रियते। इह न केवलं मनुष्याणां सुखानां प्राप्तये प्रार्थना अपितु पशूनामपि रोगनिवारणपूर्वकं तेभ्यस्सुखानां याचना क्रियते— भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम्—

**सुखम्मेषाय मेष्यै।**[११]

यथा उर्वारुकं पक्वं भूत्वा लतातान्तात् अनायासमेव स्वयं विमुच्यते एवमेव मनुष्याः अपि स्वीयां सम्पूर्णायुम् उपभुज्य तस्य देवस्य कृपया समस्त सांसारिकबन्धनेभ्य विमुक्ताः स्युरेतदर्थं तस्यैव रुद्रदेवस्य त्र्यम्बकरूपेण स्तुतिः ऋषिभिराम्नाता—

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।।**[१२]

रुद्रस्य पिनाकधनुदृढवर्माच्छादकं च स्वरूपं वर्णयन् ऋषिः एतं देवं 'शिव' इति नाम्नापि स्मरति —

**एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि।**
**अवततधन्वा पिनाकावसः कृत्तिवासा अहिं सन्नः शिवोऽतीहि।।**[१३]

इतोऽग्रे ऋषिः रुद्रं स्तुवन् कथयति यत् हे देव! त्वं शिव नामासि अस्माकं पिता चासि अतः तव अविनाशिवज्रमयं स्वरूपं वयं नमस्कुर्मः। भवान् अस्मान् पालयतु। वयं दीर्घायुष्याय अन्नधनप्राप्तये उत्तमसन्तत्याप्तये श्रेष्ठबलप्राप्तये च भवन्तं नमामः स्मरामश्च—

**शिवो नामासि स्वधितिस्ते पिता नमस्तेऽस्तु मा मा हिंसीः।**
**निवर्त्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय।**[१४]

---

११. यजुर्वेद, ३/५८—५६
१२. तदेव, ३/६०
१३. तदेव, ३/६१
१४. तदेव, ३/६३

यजुर्वेदे शिवशब्दस्य प्रयोगो द्विधा दृश्यते। शिवशब्दः कल्याणवाची वर्त्तते अतोऽनेकेषु स्थानेषु अयं शब्दो विशेषणरूपेणैव प्रयुक्तः। यथा–

**शिवेन वचसा त्वा गिरिशाच्छा वदामसि।**
**यथा नः सर्वमिज्जगदयक्ष्मं समना असत्।।**[१५]

**शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वम्।**
**शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः।।**[१६]

किञ्च यथा पूर्वोक्तेषु उद्धरणेषु दृष्टं तथा अनेकवारमयं शब्दः रुद्रस्यैव पर्यायवाचित्वेन प्रयुक्तः वर्त्तते। रुद्रशब्दस्यापि प्रयोगो यजुर्वेदे द्विधा दृश्यते। बहुषु स्थानेषु रुद्रशब्दः बहुवचनान्तः एवास्ति तत्र च सः प्रायेण आदित्यैः वसुभिश्च सार्धं स्मर्यते–

**संसृष्टां वसुभीरुद्रैर्धीरैः कर्मण्यां मृदम्।**
**हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम्।।**[१७]

परञ्च बहुषु स्थानेषु अयं रुद्रशब्दः एकवचनान्तः शिवस्य त्र्यम्बकस्य वा पर्य्यायरूपेण प्रयुक्तो वर्त्तते। सम्भवतोऽत एव शङ्करानन्द–विज्ञानभगवान्–उपनिषद्ब्रह्मयोगी इत्यादयो विद्वांसो व्याख्याकाराः रुद्रशब्दस्य व्युत्पत्तिं प्रदर्शयन् रुद्रशब्दं रुद्रदेवं वा कल्याणवाचकं कल्याणकारकं वा सिद्धं कुर्वन्ति **रुद्दुःखं द्रावयति नाशयतीतिरुद्रः, रुजं संसारदुःखं द्रावयतीति रुद्रः, यः स्वातिरिक्तरुजं द्रावयतीति रुद्रः।**[१८]

कृष्णयजुर्वेदस्य तैत्तिरीयशाखातः सम्बद्धा श्वेताश्वतरोपनिषत् तु रुद्र–शिव–हरादिशब्दान् परब्रह्मणः अपरनामरूपेणैव प्रयुङ्क्ते–

**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः।**[१९]

---

१५. तदेव, १६/४
१६. तदेव, १२/१७
१७. तदेव, ११/१५
१८. श्वेताश्वतरोपनिषद्भाष्य, ३/२
१९. तदेव, १/१०

अत्राक्षरं ब्रह्म हर इति नाम्नाभिहितः। अपरत्र च सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः सर्वव्यापी भगवान् शिवः सर्वगतः उच्यते। अन्यत्र च एक एव रुद्रो भगवान् सर्वेषां लोकानां प्राणिनां च रचनां कृत्वा तान् शास्ति रक्षति अन्ते च स्वस्मिन्नेव सङ्कोचयत्यपि।[२०]

**एको हि रुद्रो न द्वितीयाय तस्थुर्य इमांल्लोकानीशत ईशनीभिः । प्रत्यङ्जनास्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः।।**[२१]

यजुर्वेदस्य षोडशेऽध्याये शिवस्य नानानामानि नानारूपाणि नानाकार्याणि च श्रूयन्ते। आरम्भ एव तस्य उग्रस्वभावो निशिताः सायकाः महाबलशालित्वञ्च स्वरूपं निरूप्यते नमस्क्रियते च—

**नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः** [२२]

अत्र ऋषयः प्रार्थनां कुर्वन्ति यत् हे गिरिशन्त! भवतः कल्याणकर्तृकं भयानकताशून्यं पुण्यप्रकाशकं च रूपमस्ति। तेन शान्तरूपेण भवान् अस्मासु कृपां करोतु। हे गिरिशन्त! यं च बाणं भवान् जनेषु क्षेप्तुं हस्ते बिभर्त्ति तेन कस्यापि हिंसां मा विदधातु। किन्तु ये दुष्टजनाः मानवतायाः मानवानां वा शत्रवस्सन्ति तान् सर्वान् जम्भयन् दूरं करोतु अस्माकं च कल्याणं विदधातु—

**अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्।**
**अहींश्च सर्वाञ्जम्भयन्सर्वांश्च यातुधान्योऽधराचीः परासुव।।**

**अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे।**
**निशीर्य शल्यानां मुखा शिवो नः सुमना भव।।**[२३]

एवमिह शिवाख्यस्य रुद्रस्य शत्रूणां दुर्जनानां वा कृते भयानकं रूपं चित्रितमस्ति किन्तु सज्जनानां कृते तस्य कल्याणकरं रूपं वर्णितं वर्त्तते—

---

२०. तदेव, ३/११
२१. श्वेताश्वतरोपनिषद्, ३/२
२२. तदेव, १६/१
२३. तदेव, १६/१३

**या ते रुद्र शिवा तनू: शिवा विश्वाहाभेषजी।**

**शिवा रुतस्य भेषजी तया नो मृड जीवसे।।**[२४]

अस्मिन्नध्यायेऽयं पशूनां क्षेत्राणां जगतां भिषजां च पतिः उक्तः नमस्क्रियते च। इह ऋषिः भव–शर्व–रुद्र–पशुपति–नीलग्रीव–शितिकण्ठ–कपर्दी–व्युप्तकेश–सहस्राक्ष–शतधन्वा–गिरिशय–शिपिविष्ट इत्यादिभिः नामभिः[२५] सम्बोधयन् जगतः समस्तेषु पदार्थेषु तस्यैव प्रतिनिधित्वं दर्शयन् रुद्रस्यैव ब्रह्मस्वरूपं वर्णयति नमस्करोति च–

**नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च।**

**नमो वृद्धाय च सवृधे च नमोऽग्रयाय च प्रथमाय च।।**[२६]

इत्थमयं रुद्रः शिवो वा वेदेषु भावदेवतारूपेण वर्णितोऽस्ति। किन्तु पुराणेषु आगत्य अयं देवः आकारं मूर्तिमत्स्वरूपं वा गृह्णाति। लिङ्ग–शिवादिमहापुराणेषु अस्य मूर्तिमान्स्वरूपं विस्तरेण सुस्पष्टञ्च प्रकटीभवति। यद्यपि यजुर्वेदस्य सम्पूर्णः षोडशोऽध्यायः अस्मै रुद्रदेवायैव समर्पितोऽस्ति किन्तु अत्रापि ऋषिः रुद्रस्य ब्रह्मणोऽभिन्नं स्वरूपं प्रस्तुवन् स्तौति –

**नमः शम्भवाय च मयोभवाय च नमः।**

**शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च।।**[२७]

श्वेताश्वतरोपनिषदि शिवतत्त्वस्य पूर्वोक्तं वर्णनं सुस्पष्टं परब्रह्मरूपे एवास्ति। इत्थं यजुर्वेदे वर्णितः रुद्रः शिवरूपो विद्यते परन्तु स शिवोऽत्र साकारो देवो न प्रत्युतत् परमतत्त्वरूपः परं ब्रह्मैवास्ति।

***

---

२४. तदेव, १६/४६

२५. तदेव, १६/३०–४६

२६. तदेव, १६/३०

२७. तदेव, १६/४१

# अभिनयदर्पणोक्तहस्ताभिनयसमीक्षणम्

**सुभद्रादत्तः**

*एम्. फिल्. छात्रः*

*संस्कृत–विभागः, विश्वभारतीविश्वविद्यालयः*

सामवेदस्य उपवेदरूपेण नाट्यवेदस्य नाम ज्ञायतेऽस्माभिः। आचार्येण भरतेन नाट्यशास्त्रे पञ्चमवेदरूपेण नाट्यशास्त्रस्योल्लेखः कृतः। यजुर्वेदादभिनयग्रहणं तत्र आचार्यमुखान् निश्चीयते। आचार्येण नन्दीकेश्वरेण विरचितोऽयमभिनयदर्पणग्रन्थः अपि संस्कृतनाट्यजगति सुप्रसिद्धो वर्तते। नृत्यशास्त्रस्य ज्ञानसमुद्रे प्रवेशाय सूक्ष्मवर्णनापूर्वकमभिनयदर्पणस्य हस्ताभिनयचर्चा सुगमतां प्रददाति। अतः अस्मिन् शोधपत्रेऽभिनयदर्पणे वर्णितहस्ताभिनयानां प्रसङ्गोल्लेखपूर्वकं तेषां स्वरूपं समाश्रित्य मुद्रानां प्रायोगिकोपस्थापनं पत्रवाचनाभिधेयमित्यलम्।

नाट्यशास्त्रकारेण भरताचार्येणोक्तम्–

**धर्ममर्थ्यं यशस्यं च सोपदेशं ससङ्ग्रहम्।**
**भविष्यच्च लोकस्य सर्वकर्मानुदर्शकम्।।**

**सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्।**
**नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम्।।**[१]

नाट्यशास्त्रस्यास्य ऋग्वेदात् पाठ्यं सामवेदाद् गीतं यजुर्वेदाद् अभिनयं अपिच अथर्ववेदादाद्रसं च सङ्गृह्य नाट्यशास्त्रस्य संरचना जाता। भातरवर्षस्य प्राचीनपरम्परायां नृत्य–नृत्त–नाट्यानां च त्रयः सम्प्रदायाः समुपलभ्यन्ते। तेषां नामानि नन्दीकेश्वरसम्प्रदायः, भरतसम्प्रदायः अपि च कोहलसम्प्रदायः। एतेषु सम्प्रदायेषु आचार्यनन्दीकेश्वरस्य सम्प्रदाये अभिनयस्य प्राधान्यं सूच्यते। यद्यपि केषाञ्चन आचार्याणां मतेषु नन्दीकेश्वराचार्यः

---

१. नाट्यशास्त्रम्

भरताचार्यात् प्रागेव विद्यमान आसीत् परन्तु अधुना उपलब्धसंस्करणानां पाठान् अभिलक्ष्य भरताचार्य एव पूर्वाचार्य इति विदुषां मतम्। यतो हि ग्रन्थेऽस्मिन् बहुषु स्थलेषु भरत–भरतागम[२]–नाट्यशास्त्रादीनां[३] शब्दानां प्रयोगो लक्ष्यते। तत्र नन्दीकेश्वरो नन्दी शिवानुचरतण्डु वा अभिन्नः व्यक्ति आसीद् इति ज्ञायते। नन्दीकेश्वरस्य रचानारूपेण नन्दीकेश्वरसंहिता– भरतार्णवयोः ग्रन्थयोः नाम अपि समुपलभ्यते। विदुषां मतानुसारेण द्वितीयशतकं नन्दीकेश्वरस्य काल आसीत्।

यत्र भरताचार्येण अधमपात्रस्य कृते आङ्गिकाभिनयस्य उपयोगिता सूचिता तत्र आचार्येण नन्दीकेश्वरेण स्वीये अभिनयदर्पणे अग्रगण्यस्थानं प्रत्तम् आङ्गिकमभिनयम्। नृत्ये कलानामभिव्यक्तिप्रकाशनार्थं हस्ताभिनयस्य महत्त्वं दृश्यते। हस्ताभिनयस्य अपरं नाम मुद्रा इत्यपि ज्ञायते। न तु केवलं नृत्यकलायाम् अपि च तान्त्रिकोपासनादिषु अधुना प्रचलिपूजापद्धतिषु च मुद्रानामुस्थापनं दृश्यते। अभिनयदर्पणे मस्तक–हस्त–पादानां त्रयाणाम् अङ्गानां प्रत्यङ्गस्य ग्रीवायाः उपाङ्गस्य दृष्टेः अपि च स्थितिगत्योः बहुविधाः भेदाः तेषां प्रयोगस्थलानि च वर्णितानि। अभिनयदर्पणस्य भूमिकायां श्री अशोकनाथशास्त्रिणः मतं तस्यैव पुष्टिः करोति।[४]

ग्रन्थस्य प्रारम्भे भगवतः शिवस्य स्तुतिर्विहिता आचार्येण नन्दीकेश्वरेण। अस्यैव श्लोकस्योल्लेखः शार्ङ्गदेवविरचिते सङ्गीतरत्नाकरेऽपि दृश्यते–

**"आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।**
**आहार्य्यंचन्द्रतारादि तन्नुमः सात्त्विकं शिवम्।।"**[५]

---

२. नाट्यवेदं ददौ पूर्वं भरताय चतुर्मुखः।
ततश्च भरतः सार्द्ध गन्धर्वाप्सरसां गणैः।। अभिनयदर्पणम् श्लोक

३. अभिनयदर्पणम्–श्लोक.७१

४. भूमिका, अभिनयदर्पणम्, पृ.२

५. अभिनयदर्पणम्, श्लोक–१

अत्र सात्त्विकाय भगवते शिवाय प्रणामं विनिवेद्य ग्रन्थस्य शुभारम्भः जातः। भगवतः शिवस्य नटराजमूर्तिः नृत्याहित्यचर्चायां विस्मयतां विदधाति। भरतस्य नाट्यशास्त्रेऽपि शिवताण्डवस्य विस्तृतविवरणं समुपलभ्यते। अभिनयदर्पणे मस्तक–हस्त–पादानां मध्येऽत्र हस्ताभिनयानामालोचनायां प्रथमं वक्तव्यं तावद् यद् यत्र हस्तः तत्रैव नयनगमनं (दृष्टिरिति), यत्र दृष्टिर्पतति तत्र मनसः गमनम्, यत्र मनः तिष्ठति तत्र भावस्य स्थितिः, भावस्य स्थितौ रसस्यापि वर्तमानत्वं सिद्धति। उक्तं च आचार्येण नन्दीकेश्वरेण–

**"यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः।**
**यतो मनस्ततो भावो यतो भावस्ततो रसः।।"**[६]

नन्दीकेश्वरेण असंयुक्तासंयुक्तयोः द्विविधयोः हस्तयोः प्रथमतः उल्लेखः कृतः–

**"अथेदानीन्तु हस्तानां लक्षणं प्रोच्यते मया।**
**असंयुक्ता संयुताश्च हस्तद्वेधा निरूपिता"।।**[७]

श्रीअशोकनाथशास्त्रिणा सम्पादिते अभिनयदर्पणस्य भूमिकायां ग्रन्थेऽस्मिन् अष्ट–विध–हस्तभेदानां उल्लेखः प्राप्यते। ते च हस्तभेदाः असंयुत–संयुत–देवहस्त–दशावतारहस्त–बान्धवहस्त–नृत्तहस्त–नवग्रहहस्ताश्च इति। प्रसङ्गक्रमेण वक्तव्यं नृत्तस्य संज्ञायाम् आचार्येण नन्दीकेश्वरेण उक्तम्–**"भावाभिनयहीनं तु नृत्तमित्यभिधीयते।"**[८] भावप्रकाशनस्य ग्रन्थकारस्य शादरातनयस्य मते तु यदेव रसात्मकं तदेव वाक्यार्थाभिनयप्राधानम्, यदेव भावाश्रितं तदेव पदार्थाभिनयात्मकं भवति। आचार्येण भरतेन नाट्यशास्त्रस्य नवमेऽध्याये हस्तमुद्रानामालोचना कृता। तत्र असंयुक्तानां हस्तानां सङ्ख्या चतुर्विंशति, संयुक्तहस्तानां सङ्ख्या च त्रयोदश इति, इतोऽपि नृत्यहस्तानां सङ्ख्या सप्तविंशति इति। तस्य मतानुसारं

---

६. नाट्यशास्त्रम्, अध्याय–४

७. अभिनयदर्पणम्

८. अभिनयदर्पणम्

नृत्यहस्ताः करणे प्रयुक्ताः भवन्ति। पताकादीनां हस्तानां शब्दस्य अर्थाभिनये प्रयुक्तत्वं सिध्यति। आवेष्ठित–उद्वेष्ठित–व्यवर्तित–परिवर्तितानां चतुर्णां करणानां तत्र स्वरूपं प्रकाशितम्। अधुना प्रश्नः उदेति के तर्हि पताकादयो हस्ताः? तदा अभिनयदर्पणे दृश्यन्ते नृत्तोपयोगीनां त्रयोदश हस्तानां नामानि।

**''पताका स्वस्तिकाख्यश्च डोलहस्तस्तथाञ्जलिः।**
**कटकावर्द्धनश्चैव शकटः पाशकीलकौ।।**

**कपित्थः शिखरः कूर्मो हंसास्यश्चालपद्मकः।।**
**त्रयोदशैते हस्ताः स्युर्नृत्तस्याप्युपयोगिनः।।''**[९]

अभिनयदर्पणे असंयुतहस्तस्य २८ प्रकाराः भेदाः दृश्यन्ते–

**''पताकास्त्रिपताकोऽर्द्धपताकः कर्त्तरीमुखः।**
**मयूराख्योऽर्द्धचन्द्रश्च आरालः शुकतण्डुकः।।**

**मुष्टिश्च शिखराख्यश्च कपित्थः कटकामुखः।**
**सूची चन्द्रकला पद्मकोशः सर्पशिरस्तथा।।**

**मृगशीर्षः सिंहमुखः काङ्गुलश्चालपद्म।**
**चतुरो भ्रमरश्चैव हंसास्यो हंसपक्षकः।।**

**संदंशो मुकुलश्चैव ताम्रचूडस्त्रिशूलकः।**
**इत्यसंयुतहस्तानामष्टाविंशतिरीता।।**[१०]

स्साक्स्क्स्क्स्क्क्स्क्स्क्स्क्अनन्तरं संयुतहस्ताभिनयानां २२ भेदाः प्राप्यन्ते। नृत्यहस्तानां अभिनयदर्पणे १३ प्रकारभेदाः उल्लिखिताः परन्तु नाट्यशास्त्रे सप्तविंशति इति। नाट्यशास्त्रेण सह सङ्गीतरत्नाकरे वर्णितभेदानां सादृश्यं दृश्यते। नाट्यशास्त्रे तथा सङ्गीतरत्नाकरे हस्तसंख्या ६४ प्रकाराः

---

९. अभिनयदर्पणम् पृ.
१०. तदेव, ८६–६२

मतान्तरे ६७ अथवा ७० इति। देवहस्त[११] बान्धवादिहस्तानां[१२] भेदाः केवलम् अभिनयदर्पणे प्राप्यन्ते।

एवमेव नाट्यशास्त्रे–

**''पताकास्त्रिपताकश्च तथा वै कर्तरीमुखः।**
**अर्द्धचन्द्रा ह्यरालश्च शुकतुण्डुस्तथैव च।।**

**मुष्टिश्च शिखराक्यश्च कपित्थः कटकामुखः।**
**सूच्याख्यः पद्मकोशश्च तथा वै सर्पशीर्षकः।।**

**मृगशीर्षः परो ज्ञेयो हस्ताभिनयोक्तृभिः।**
**कागङ्गुलोऽलपद्मश्च चतुरो भ्रमरस्तथाः।।**

**हंसास्यो हंसपक्षश्च सन्दशो मुकुलस्तथा।**
**ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिताः।।**

**असंयुता संयुताश्च गदतो मे निबोधत।**

एवं नाट्यशास्त्रे यत्र त्रिपताकामुद्रायाः लक्षणम्–

**अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम्।**
**पताके तु यदा वक्राऽनामिका अङ्गुलिर्भवेत्।।**

**त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत।।**[१३]

तत्र अभिनयदर्पणे तस्य लक्षणम्–**''स एव त्रिपताकः स्याद् वक्रितानामिकाङ्गुलिः''**। अर्थात् अनामिकाऽगुङ्ल्याः वक्रत्वे सति त्रिपताकमुद्रायाः अभिनयम्। एवं तौलनिकमध्ययनम् संपश्य साधारणतया ज्ञायते यद् भरताचार्यस्य नाट्यशास्त्रे १३ सङ्ख्यकानि संयुतहस्तानां नामानि

---

११. अथात्र ब्रह्मरुद्रादिदेवताभिनयक्रमात्।
मूर्तिभेदेन ये हस्तास्तेषां लक्षणमुच्यते।। अभिनयदर्पणम् श्लोक–२०४

१२. वामे तु शिखरं धृत्वा दक्षिणे मृगशीर्षकः।
धृतः स्त्रीपुंसयोर्हस्तः ख्यातो भरतकोविदैः।। तदेव श्लोक–२३१

१३. नाट्यशास्त्रम् ६/२२६–२७

समुपलभ्यन्ते। अभिनयदर्पणे च त्रयोविंशति संयुतहस्तानां नामानि प्राप्यन्ते। निषध–मकरयोः हस्तयोः उल्लेखः अभिनयदर्पणे नास्ति। अभिनयदर्पणे अतिरिक्ताः ये संयुताः हस्ताः प्राप्यन्ते ते शिवलिङ्गकर्त्तरीस्वस्तिक–शकट–शङ्ख–चक्र–सम्पुट–पाश–कीलक–मत्स्य–कूर्म–वराह–गरुड–नागबन्ध–खद्वा–भेरण्डाश्च।

एवमेव असंयुतहस्तभेदप्रसङ्गे नाट्यशास्त्रे चतुर्विंशति अभिनयदर्पणे च अष्टाविंशति हस्तमुद्रानामानि प्राप्यन्ते। नाट्यशास्त्रे अर्धपताक–मयूर–चन्द्रकला–सिंहमुखानां नामानि नैव उपलभ्यन्ते।

आचार्यभरतस्य नाट्यशास्त्रम् आश्रित्य काव्यशास्त्रजगति बहूनि कार्याणि अभवन् अधुनाऽपि प्रवर्तन्ते च। परन्तु तदपेक्षया न्यूनमेव कार्यम् अभिनयदर्पणमाश्रित्य अस्माकं सकाशे उपलब्धं भवति। अतः शोधपत्रेऽस्मिन् नाट्यशास्त्रे वर्णितहस्तमुद्राप्रसङ्गेन सह अभिनयदर्पणोक्तहस्तमुद्राप्रसङ्गः सलक्षणं प्रयोगपुरस्समालोच्य अभिनयदर्पणस्य अद्यत्वे अभिनयक्षेत्रे प्रासङ्गिकत्वं निरूपयितुं प्रयासो विहितः इत्यलम्।

***

# भासकृतिषूल्लिखितानां वैज्ञानिकतथ्यानां विवेचनम्

**डॉ० आशुतोषद्विवेदी**

*सहायक–आचार्यः, स्नातकोत्तरसंस्कृतविभागः,*

*जयप्रकाशविश्वविद्यालयः, छपरा*

नूनमस्माकं संस्कृतवाङ्मये भूयांसि तत्त्वानि एतादृशानि सन्ति येषामत्र सम्यक् प्रयोगं विधाय सुधियः किञ्चिन् नूतनं सरलं विशिष्टञ्च उपस्थापयितुं यतन्ते। अद्यत्वे प्रायः समस्तेषु क्षेत्रेषु नूतनाविष्काराः क्रियन्ते। येनास्माकं समेषां जनानां दैनन्दिनजीवनं सरलं–सरसं सुविधायुक्तञ्च भवितुमर्हति। एतेषु प्रयोगेषु बहूनां प्रयोगाणां विषये अस्माकं ग्रन्थेषु पूर्वत एव चर्चा कृता वर्तते। परञ्च इतोऽपि बहवः प्रयोगाः एतादृशाः सन्ति येषां सम्यङ्मूल्याङ्कनं परीक्षणञ्च सम्पाद्य प्रयोगः आनेतव्यः। अद्यत्वे अस्माकं वैदिकानां लौकिकानां ग्रन्थानां सहयोगेन रसायनशास्त्रे, भौतिकशास्त्रे, जन्तुविज्ञाने, शिल्पविज्ञाने, गणितशास्त्रे, वनस्पतिशास्त्रे अथ च ज्योतिषशास्त्रे बहुसरलता समागता वर्तते। परं बहूनि एतादृशानि कार्याणि सन्ति येषां विषये कार्यं कर्तुमाऽऽवश्यकं वर्तते।

वर्षैकाभ्यन्तरे सर्वे दृष्टवन्तः यत् न केवलं देशेऽपितु विदेशेष्वपि अतिवृष्टिर्जाता। तत्र केरलतमिलनाडुमहाराष्ट्रकाश्मीरबिहारादयः प्रमुखानि नामानि सन्ति। जनाः प्रलयङ्कारिणीं जलविभीषिकां दृष्टवन्तः। यया शतशः सहस्रशः जनाः हताराहताः च निधयः निमज्जिताः, नगराणि ध्वंसितानि। भवतु नाम। अद्यत्वे इति चिन्तनमावाश्यकं वर्तते यद् अनया आपदा निरसनाय कः उपायो वर्तते। अतिशयवृष्टिकारणेन महाराष्ट्रे कृषकाणां सस्यानि नष्टानि अभवन्। कथमस्माकं कृषीणां संरक्षणं भूयात्। येषां कृषकाणां कृषिरेवाधारः जीवनस्य, तेषां जीवनस्य गतिर्बहुक्लिष्टा भवति अस्यामवस्थायाम्। अतः अतिवृष्टिरकालवृष्टिश्च कथं वारणीया अमुं विषयमधिकृत्य किञ्चिदत्र प्रस्तूयते।

वयं जानीमो यद् अस्माकं देशः कृषिप्रधानः, अत्र भूयांसो हि जनाः कृषिकार्ये निरताः। ते स्वकीयं सम्पूर्ण जीवनमस्मिन्नेव कार्ये नियोजयन्ति।

किन्तु तेषां क्षेत्रे परिश्रमम् अतिवृष्टिकरणाद् अनावृष्टिकारणाद्वा बहुबारं नष्टं भवति। भारतस्य कृषकाणामस्यामवस्थायां पृष्ठेऽत्रत्याः जलवायुः वर्तते। यो निरन्तरं परिवर्तनशीलः वर्तते। अथ च अस्माकं क्षेत्राण्यपि भिन्नभिन्नप्रकृतियुतानि सन्ति। कुत्रचिद् बहुवृष्टिर्भवति तु कुत्रचित् वृष्टिरेव न भवति। एतस्याः समस्यायाः समाधानाय अस्माकं संस्कृतवाङ्मये निर्देशो लभ्यते यत् कथं वृष्टिः वारणीया उत् वा कथं वृष्टिः कारणीया इति। तमेव विषयमधिकृत्य अथ च प्राक्तनमधुनातनं तथ्यं संयोज्य स्वकीयं मतं उपस्थापयितुमिच्छामि।

महाभरते अर्जुन–जयद्रथस्य संवाद आगच्छति यत्र अर्जुनः प्रतिज्ञां करोति यत् सूर्यास्तं प्रागहं जयद्रथं हनिष्यामि। कौरवाः जयद्रथं येन–केन विधिना सूर्यास्तं यावत् संरक्षितुं दृढसङ्कल्पिताः आसन्। ते जयद्रथं जुगूहु। प्रतिज्ञायाः कालोऽत्र शनैः–शनैः समाप्तं प्रत्ययात्। परं जयद्रथस्तु अन्तर्लीनः आसीत्। भवतु नाम। भगवता कृष्णेन स्वप्रभावाच्चक्रेण च सूर्यमाच्छादयत्। सद्यः एव सूर्यः अस्त इव विभातिं कौरवाः प्रमुदिताः सञ्जाताः। परं अलौकिकशक्त्या युक्तः श्रीकृष्णः स्वयोजनानुसारं आच्छाद्यमाणात् सूर्यात् स्वचक्रं अपसारयति। सर्वत्र व्याप्तोऽन्धकारः सद्यः अपसरति। अर्जुनः श्रीकृष्णस्य सहायतया स्वप्रतिज्ञां पूरयति। भवतु नाम। अनया कथयात्राऽयं सङ्केतः प्राप्यते यत् कापि एतादृशी विधा आसीत् यया सूर्यः निमज्जितोऽभवत्। मान्याः। अद्यत्वे प्रायसोः वैज्ञानिकाः इति मन्यन्ते यत् संस्कृतसाहित्ये अतिशयोक्तिपूर्णकथनं प्राप्यते। अहमपि इति स्वीकरोमि। किन्तु तावन्न यावत्ते मन्यन्ते। मन्मतानुसारं निश्चयेन कापि विशिष्टा वार्ता वर्तते विषये तस्मिन्नस्माभिः चिन्तनं करणीयम्।

यतोहि–

**लौकिकानां हि साधुनामर्थं वागनुवर्तते।**
**ऋषीणां पुनरन्यानां वाचमर्थोऽनुधावति।।**[1]

एका इतोऽपि आधुनिकी घटना वर्तते यस्याः प्रसङ्गेस्मिन् चर्चा

१. उत्तररामचरितम्–१/१०

कर्तुमिच्छामि यत् नैके यूरोपियाः देशाअथ च एशियाईदेशाः एतादृशाः सन्ति ये मेम् अवरोद्धुं प्रयतन्ते। सार्धैकदशकपूर्वं यदा रसियादेशे प्रथम (G-8) अष्टानां देशानां सम्मेलनं मुक्ताकाशेऽभवन्नासीत् तदा बाधोत्पादकं मेघमवरोद्धुं रसियादेशः बहूपायम् कृतवान्, यस्य फलस्वरूपं सम्मेलनमिदं सफलतां प्राप्तवान्। एवमेव अस्माकं प्रतिवेशिराष्ट्रे चीनदेशेऽपि विश्वस्तरीययौलम्पिक—क्रीडायाः उद्घाटनावसरे अभवत्। पूर्वतः वृष्ट्याः प्राप्तसंकेतस्य विनारणाय सः देशः उत्त्मोपायः कृतवान्। सः पूर्वयोजनानुसारं सहस्रैकंसिल्वर—आयोडाईट—कृस्टलेतिरासायनिकतत्त्वयुक्तं राकेटम्मेघे प्रक्षेपितवान्। भवतु नाम। तस्य लक्ष्यं आसीत् यज्जलं बीजीङ्गेति राज्ये मा पतेत् जलं निकटस्थे हनोई इति प्रान्ते भवेत्। इति कृत्वा तस्यायं प्रयोगः प्रविधया सफलो जातः।

उपर्युक्तानामुदाहरणानामनुसारं वक्तुमिच्छामि यद् अस्माकं भारतीवैदिकवाङ्मयेऽथ च पौराणिकवाङ्मये एतादृशानां समस्यानां समाधानाय उपायाः आसन्। एतस्याः एकं लघुरुपं भासकृतरूपके दूतवाक्ये मिलति यत्र अर्जुनं प्रशंसन् श्रीकृष्णः वक्ति—

**कैरातं वपुरास्थितं पशुपतिर्युद्धेन संतोषितो।**
**वह्ने खाण्डवमश्नतः सुमहती वृष्टिः शरैच्छादिता।**

**देवेन्द्रार्तिकरानिवातकवचा नीताः क्षयं लीलया।**
**नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः।।**[२]

अस्मिन् श्लोके एकया विशिष्टकथया सह एकः सान्दर्भिकः सन्देशोऽपि निहितो वर्तते। अत्रागतं वाक्यं ''वह्ने खाण्डवमश्नतः सुमहती वृष्टिः शरैच्छादिता'' यत्र अग्निदेवः खाण्डववनं स्वोष्णतापेन भोक्तुमीहते। परं तत्र तस्मिन्नरण्ये इन्द्रप्रियः तक्षको निवसन्नासीत्। यं त्राणाय इन्द्रो बारं बारं वृष्टिं करोति स्म येनाग्निः निर्वापितस्स्यात्। बारं बारं वृष्टिकृते सति बुभुक्षितः अग्निदेवः विप्ररूपं संधार्य अर्जुनस्य प्राग्गच्छति। धनुर्धरः अर्जुनः स्वशराणां जालं सन्धाय वृष्टिमवरोधयति। येनाग्निः स्वबुभुक्षां पूरयति।

मदीय कथनस्यायमभिप्रायो वर्तते यद् येन प्रविध्या चीनदेशे वैज्ञानिकाः

२. दूतवाक्यम्—प्रथमाङ्कः ३२

रोकेटमाध्यमेन वृष्टिमवरोधितवन्तः सा प्रविधिः अस्मांक पार्श्वे प्रक्काले आसीत्। तस्मिन् समये शरे रसायनिकपदार्थानां लेपनं कृत्वा कार्यमिदं भवति स्म।

आयुधानामुपरि रासायनिकपदार्थानां लेपनविषयकी चर्चा अस्माकं संस्कृतवाङ्मये मिलति। आकाशभैरवकल्नामके ग्रन्थे अग्निक्रीडानां भुशुण्डीनाञ्च चर्चा आगता वर्तते। येन ज्ञायते यत् शरेष्वपि रसायनिकतत्त्वानां लेपनं कृत्वा मेघभेदनं भवतिस्म।

**ततः पश्येद् दारुयन्त्रविशेषान् स्यन्दनाकृतीन्।**
**दिवा भ्रान्त्या कल्पयतः केनचित्तेजसा निशि।।**

**उच्चावचान् बाणवृक्षान् ततः पश्येज्जनेश्वरः।**
**स्पुलिङ्गान् चामराकारान् तिर्यगुदगिरतो बहून्।।**

**ततः प्रलयकालोघद्धनगर्जित भीषणम्।**
**शृणुयाद् बाणनिनदं विनोदावधिसूचकं।।**

आकाशभैरवकल्पस्य विषयेस्मिन्नितोऽपि चिन्तनं करणीयम् आवश्यकं वर्तते।

भारतेऽतिवृष्ट्याः समस्या बह्वधिका वर्तते। मन्येयं समस्या सृष्टिकालाद् वर्तते इति कृत्वैव वैदिकग्रन्थेषु वृष्टिं निवारयितुं जनाः पर्जन्यं प्रार्थयन्ति स्म यदतिवृष्टिम्मा करोतु–

**अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वा न्यूत्येतवा उ।**
**अजीजन ओषधीर्भोजनाय कमुत प्रजोभ्योऽविदो मनीषाम्।।**[३]

अतिवृष्टिं वारयितुमेव अर्जुनस्यायं प्रयोगः प्रविधियुक्तः आसीत् इत्यहं मन्ये। उपर्युक्ताभिः कथाभिरुद्धरणैश्चाहं वक्तुमिच्छामि यत् प्रकृत्या सह अत्याचारः अस्माकं कृते अस्माकं अनागतानां कर्णधाराणां कृते अतीव–हानिकरः। ययास्माकं भाविजीवनं सुरक्षितं वर्तते तया सहात्याचारः कथमपि उचितं नास्ति। किन्तु येन कार्येणाधिकाः जनाः लाभान्विताः भवन्ति

---

३. ऋग्वेदः, ०५/८३/१०

तत्कार्यं शास्त्रीयदृष्ट्याप्यनुचितन्तनं भवति। उक्तञ्च—

**त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्**
**ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्।।**[४]

अद्यत्वे दृश्यश्रव्यमाध्यमेन प्रायो विदेशेषु दृश्यते यत् कथन्ते भवननिर्माणात्प्राग् तत्रस्थितान् वृक्षान् अन्यत्रारोपयन्ति। एतस्मै उत्तमकर्याय ते प्रविध्याः अधिकाधिकं प्रयोगं कुर्वन्ति। एवमेव मेघे निहितस्य जलस्य हानिरपि मा भवेदितिकृत्वा सावधानेन मेघस्य स्थानान्तरणं भवेत्।

***

---

४.　चाणक्यनीति ३/११

# श्रीमद्भागवतवैशिष्ट्यविमर्शः

**विनयकुमारः**
*पूर्णप्रज्ञासंशोधनमन्दिरम्, बेंगलूरुः*

विदितमेवैतदस्ति विदुषां यत्किल सन्तापमयसंसारजीर्ण-कान्तारनिरन्तरभ्रमणश्रमजुषो जीवजातस्य स्वप्रकाशपरमानन्दचिद्धाम-निर्विरामविश्रामनिदानमुपनिषदर्णवोन्मन्थनसमुद्गतात्मतत्त्वामृतकलशम-खिलार्तिहारिणा करुणागृहीतमानवतनुना हरिणा कथं जागदुद्धारं कृतमिति विषयी कृत्य व्यासेन महर्षिणा श्रीमद्भागवत-महापुराणं रचितम्। श्रीमद्भभागवतमहापुराणं भगवतः श्रीकृष्णस्य प्रतिमास्थानीयम्। पुराणमिदं कलिकालाख्यव्यालदष्टानां जाङ्गुलिक इव विषत्रासं विनाशति। श्रीमद्भागवतमहापुराणं समेषां जनानां मधु पाययतीति सर्वेषामनुभवसिद्धम्।

महाभारतं पुराणान्तराणि च विरचय्य स्वाश्रमे अतृप्तवदासीनः भगवान् व्यासो नारदप्रार्थनया पुराणमिदं रचयामासेति अत्रैव श्रूयते। तेनेदं विज्ञायते पुराणान्तरेभ्योऽपि भागवतस्य महत्त्वं ग्रन्थकर्तुः अभिमतमिति। श्रीमद्भागवतं सकलशास्त्रसारभूतं पुराणमूर्धन्यतमं धन्यतमं च सद् भागवतानां खलु भाग्यवतां महद्भागधेयमवधेयम्। 'असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्माणि' इत्यायुक्तेन वैरग्यभक्तिसन्देशेन ब्रह्मण्यसङ्गस्तदितरत्र रतिश्चेति वैपरीत्यद्वयलक्षण-भवतक्षकदष्टानां परीक्षिन्नरपतिसदृशाणां शरीरिणामशेष-शोकार्णवशोषणायेदमलमिति 'एकं भागवतं शास्त्रं मुक्तिदानेन गर्जती' ति च को नाम कोविदो न मनुते? भागवतं शास्त्रं मुक्तिदाने समर्थमिति सर्वैः मन्यते एव।

## भागवतं वेदार्थनिर्णायकम्

अनुभवसाहित्यं हि वेदाः। न वेन्तुं शक्यन्ते मन्दभाग्यैरज्ञजनैश्च। अत एव भगवान् कृष्णद्वैपायनः तदर्थनिर्णायकं ब्रह्मसूत्रमपि चकार। तद्विवरणार्थमेव इतिहासग्रन्थाः अष्टादशपुराणानि च तस्मादेव उज्जग्मुः। भगवत्कर्तृकत्वादेव पुराणेतिहासाः पञ्चमवेदत्वेन प्रथिताः। पुराणेतिहासाभ्यामेव वेदस्य समुपबृंहणं कार्यम्। तदैव जायते तत्त्वबोधः। तदुक्तं व्यासमहर्षिणा ''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'' इति। तत्रापि विशेषतः श्रीमद्भागवतमहापुराणं वेदस्य अर्थं

सम्यक् निरूपयति समर्थयति च।

**भारतार्थविनिर्णयः**

निर्णायकग्रन्थेषु ब्रह्मसूत्रमिव निर्णयग्रन्थेषु महाभारतमग्रिमपदवीमा–रोहति। एतादृशस्य महाभारतस्यापि क्वचित्प्रमेयं निर्णीयते भागवतवचनेनैव। यद्यपि इतिहासत्वेन महाभारतमेव भागवतापेक्षया अधिकतया निर्णायकं भवति। ''घटनानिरूपणावसरे अन्योऽन्यं विरोधाभासे सति पुराणापेक्षया इतिहास एव प्रबलप्रमाणं भवति'' इति तु सुविदितचरमेव। तथापि क्वचन प्रमेयेषु भागवतमेव निर्णायक त्वेन ग्राहयम्।

महाभारते हि महाभारतयुद्धं प्रमुखतमम्। तत्र च भगवतः कृष्णस्यानुग्रहः दायित्वं च प्रतिप्रसङ्गं दरीदृश्यते। महाभारते तु तत्स्पष्टतया भासते। किन्तु भागवते पुनः प्रथमस्कन्धे निरूपितेन भीष्मस्तवराजेन[१] तथा कृष्णस्यादर्शनानन्तरं संवृत्तेन अर्जुन–धर्मराजसंवादेन[२] च महाभारतयुद्धे कृष्णस्य सर्वसंयोजकत्वं स्फुटीभवति। इत्येवं महाभारते प्रस्तुतानां बहूनां प्रमेयाणां निर्णयो भागवतद्वारा भवति इति हेतोः ''भारतार्थविनिर्णयः'' इति भागवतस्य गरिमा उद्घोष्यते।

**गायत्रीभाष्यरूपः**

चतुर्विंशतिवर्णात्मकः, दशपदात्मकश्चासौ गायत्रीमन्त्रः सकलदेवसार–भूतः। अत एव प्रथितं शास्त्रे ''वेदमाता तु गायत्री'' इति। तादृशस्य च मन्त्रस्य भाष्यरूपमिदं भागवतमिति गरुडवचनम्। **''सत्यं परं धीमहि''**[३] इति मङ्गलपद्ये एव गायत्रीधटितधीमहिपदम् उल्लिख्यते श्रीमद्भागवते। तद्वारा गायत्री–भागवतयोः सम्बन्धः सूचितः श्रीवेदव्यासेन। स च सम्बन्धः भाष्यरूप इति गारुडस्याशयः। गायत्री च भगवतः व्यापकत्वं, सृष्टिकर्तृत्वं, भर्जकत्वं, क्रीडामयत्वं, सर्वध्येयत्वं, बुद्धिप्रेरकत्वञ्च वर्णयति इति तु सुज्ञातमेव। भागवते पुनः भगवद्भक्तानां भगवदवताराणाञ्च कथाव्याजेन भगवतः एते गुणाः विव्रियन्ते।

---

१. श्रीमद्भागवतम् १/६/३.५0

२. तदेव १/१४/५...२८

३. तदेव १/१/१

यथा–

मार्कण्डेयस्य प्रलयदर्शनकथनेन भगवतो देशतो व्यापकत्वं वर्णितं भवति। तथैव उत्तरायाः गर्भे परीक्षितः दितेः गर्भे मरुद्देवानां च रक्षितत्वकथनेन तस्य सर्वरक्षकत्वादि कर्तृत्वं, भृगोः परीक्षणेन च सर्वोत्तमत्वम्, ध्रुवादिभक्तानां स्तुत्या, ध्यानेन च सर्वस्तुत्यत्वं, सर्वध्येयत्वम्, अर्जुनादीन् निमित्तीकृत्य महाभारतयुद्धे दुर्योधनादीनां हननेन सर्वसंहारकत्वम्, उद्धवं प्रति गीतोपदेशेन बुद्धिप्रेरकत्वं, शुकादीनां प्रवचनादौ बुद्धिप्रेरकत्वेन सर्वबुद्धिप्रेरकत्वं, सविस्तरं निरूपितं भवति। इत्यतो 'गायत्रीभाष्यरूपोऽसौ' इति वचनं सार्थक्यं भजते। अपि च भागवतस्य द्वादशस्कन्धे एका घटना निरूप्यते। गुरुणा वैशम्पायनेन शप्तः याज्ञवल्क्यः सूर्यनारायणं सूपतस्थे **''ओं नमो भगवते आदित्याय**[१] इत्यादि वचनैः। तानि च वचनानि गायत्रीमन्त्रस्य भाष्यमिव प्रतिभान्ति। यथा **''अखिलजगदात्मस्व– रूपेण कालरूपेण च चतुर्विधभूतनिकायानां ब्रह्मा.... व्यवधीयमानो''**[२] इति वाक्यन्तु तत् शब्दस्य भाष्यरूपेण वर्तते। अत एव उक्तं श्रीमदाचार्येण ''गायत्रीभाष्यरूपोऽसौ'' इति।

**परमपदप्रापकं भागवतम्**

श्रीमद्भागवतं सकलशास्त्रसारभूतं, पुराणमूर्धन्यतमं च सद् भागवतानां किल भाग्यवतां महद्भागधेयफलम् अवधेयम्। ''पिबत भागवतं रसमालयम्'' श्लोकार्धं श्लोकपादं वा भक्त्या भागवतं पठेत्। इत्यादि बादरायणोक्तिमनुरुध्य भागवतोक्त भगवद्गुणानुसन्धानं, तत्कथामृतपानञ्च यावज्जीवमनुष्ठेयम्। न केवलं यावज्जीवम्, अपि तु लयपर्यन्तं मुक्तौ च अनुवर्तनीयम्। आह च द्वैपायनः ''पिबत भागवतं रसमालयं मुहरहो रसिका भुवि भावुकाः'' इति।

अत्र प्रतिपाद्यः सर्वोत्तमो नारायणश्च सर्वदेवोपास्यः। अत्र च तेन क्रियमाणाः सृष्ट्यादिव्यापाराः, तस्य स्वातन्त्र्य–सार्वज्य–भक्तवात्सल्यादयो महागुणाश्च प्रतिस्कन्धं, प्रत्यध्यायं, प्रतिश्लोकं, प्रतिपदञ्च प्रतिपादिताः सन्ति। कथाव्याजेन च भक्तैः अनुकरणीयाः गुणाः उपवर्णिताः। अत एव पुराणमिदं

---

१. श्रीमद्भागवतम् १/१५/१६

२. तदेव १२/७/३२...३६

कलिकालाख्यव्यालदंष्टानां जाङ्गलिक इव विषत्रासं विनाशयति।

तादृशस्यास्य ग्रन्थस्य गरिमाणं गारुडवचनेनैव उद्घोषयति श्रीमन्मध्वाचार्यः–

**''अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः।**
**गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः।।**

**पुराणानां साररूपः साक्षाद्भगवतोदितः।**
**द्वादशस्कन्धसंयुक्तो शतविच्छेदसंयुतः।**

**ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः।।**[1]

सुप्रथितमिदं विद्वत्प्रपञ्चे ''ब्रह्मसूत्र–भारत–गायत्री–वेद–पुराणानि च प्रमाणतल्लजानि'' इति। एतादृशानां पञ्चानामपि सारोपेतमिदं श्रीमद्भागवतमिति तु ग्रन्थस्यास्य महत्त्वं, प्रामुख्यञ्च सूचयति।

**वेदार्थपरिबृंहितः**

''इतिाहसपुराणाभ्यां वेदं समुपबृंहयेत्'' इति महाभारतवचनम्। इतिहासपुराणाभ्यामेव अस्पष्टार्थानां वेदानां तात्पर्यार्थः निर्णेय इति भारतस्याशयः। तत्रापि पुराणतल्लजं भागवतं विशेषतः वेदार्थपरिबृंहकं भवतीति किमु वक्तव्यम्। यतो भागवतं ''निगमकल्पतरोर्गलितं फलम्''। तादृशे च फलरूपे भागवते तरुरूपस्य निगमस्य अर्थसारवत्वं प्रदर्शयितुमेव भगवान् व्यासो भागवते क्वचनसन्दर्भे वेदवचनान्येव उल्लिखितवान्। तच्च द्वितीयस्कन्धे प्रस्तुतेन पुरुषसूक्तविवरणेन एवं दशमस्कन्धे निरूपितेन श्रुतिगीता प्रबन्धेन च स्फुटीभविष्यति। एवमेव बह्वत्र भागवते विवरणरूपतया श्रुतिवचनानि दरीदृश्यन्ते।

**अर्थोऽयं ब्रह्मसूत्राणाम्**

व्यासप्रणीतानि च चतुःषष्ट्यधिकपञ्चशतसङ्ख्याकानि सूत्राणि ब्रह्मसूत्रत्वेन प्रथितानि। निर्णायकग्रन्थेषु प्राधान्यं भजतेऽयं ग्रन्थः। आप्ति–श्रुति–युक्तिमूलत्वात्। गुणपूर्णस्वरूपत्वञ्च निर्णीयते। तृतीयाध्याये पुनः तादृशस्य ब्रह्मणः प्राप्त्युपायाः मननादयो निरूप्यन्ते। चरमे च अध्याये

---

१. श्रीमद्भागवतम् १/१/१

तत्फलस्य मोक्षस्य मार्गः स्वरूपञ्च विव्रियते। भागवते पुनः ब्रह्मसूत्रप्रतिपादितं परब्रह्मस्वरूपम् अन्यान्याख्यायिकद्वारा निरूप्यते। तथा हि–

अष्टमस्कन्धे समुद्रमथनावसरे प्रादुर्भूता लक्ष्मीः भर्तारं स्वयं वरयितुं प्रवृत्ता। ''विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम्। गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत'' इत्युक्तदिशा गन्धर्वादिसङ्कुलिते तादृशे सदसि गुणपूर्णो दोषदूरश्च यः कोऽपि वरो न लभ्यते। अन्ते च ''एवं विमृश्याव्यभिचारिसद्गुणं परं निजैकाश्रयिसद्गुणाश्रयम्। वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्'' इति 'गुणपूर्णत्वाद् दोषदूरत्वाच्च मुकुन्द एव वरत्वेन वृत' इति वर्ण्यते। एवञ्च लक्ष्मीस्वयंवररूपया अनया आख्यायिकया ब्रह्मसूत्रे आद्ययोः अध्यायाोः प्रतिपादिते विष्णोः दोषदूरत्व गुणपूर्णत्वे प्रसाधिते भवतः। एवमेव अम्बरीष–प्रह्लाद–ध्रुवादिभक्तानामाख्यायिकाभ्यामपि भगवतो गुणपूर्णत्वंदोषदूरत्वञ्च क्वचन साक्षात् क्वचन परम्परया च प्रतिपाद्यते। ''धर्मः प्रोज्झितकैतवोऽत्र परमो.....'' इति प्रतिज्ञानदिशा भागवते प्रोज्झितकैतवपदाभिप्रेतो ऐहिकफलापेतारादित्यरूपो परमो धर्मः प्रतिपाद्यते। तत्त्स्वरूपमहत्वादि–कथनरूपेण वा साधकानां साधनानुष्ठानप्रदर्शनद्वारा वा। शुक्राचार्योपदेशेन परीक्षित् मननादीन् अनुष्ठाय मोक्षमेव प्राप्तवान् इत निरूप्यते भागवते। तद्वारा ब्रह्मसूत्रस्य तृतीयस्य च साधनाख्याध्यायस्य तात्पर्यार्थे विवृतो भवति। द्वितीयस्कन्धे पुनः भगवदादेशेनैव चतुर्मुखः सहस्राब्दं तपस्तेपे। तेन च सन्तुष्टो भगवान् ''तस्मै स्वलोकं भगवान् सभाजितः सन्दर्भयामास परं न यत्पदम्'' इति वैकुण्ठलोकमेव प्रादर्शयत्। तत्प्रसङ्गे च अष्टसु श्लोकेषु विष्णुलोकस्य वैभवं वर्ण्यते। तेन च ब्रह्मसूत्रस्य चरमस्य फलाध्यायस्य विष्णुलोकवैभरूपं प्रमुखमेव प्रमेयं निरूपितं भवति। इत्येवं ब्रह्मसूत्रस्य प्रमुखप्रमेयानि साक्षाद्वा परम्परया वा सुस्पष्टं प्रतिपाद्यन्ते श्रीमद्भागवते इत्यत एव उद्घोषितं ''अर्थोऽयं ब्रह्मसूत्राणाम्'' इति।

**पुराणानां साररूपः**

''अष्टादशपुराणानां कर्ता सत्यवतीसुतः'' इत्युक्तदिशा अष्टादशपुराणानि च बादरायणप्रणीतानि इति निश्चप्रचम्। तत्रान्यतमिदं

भागवतम्। सप्तदशपुराणानां निर्माणानन्तरमन्तिमतया निर्मिते भागवते इतरपुराणानां सारवत्त्वं स्पष्टमेव। ननु ''अत्र सर्गो विसर्गश्च स्थानं पोषणमूर्तयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराशयः।''[१] इति भागवतस्य लक्षणानि उच्यन्ते। तानि च लक्षणानि सर्वेष्वपि पुराणेषु साधारणानि। इत्यतो भागवतमिव सर्वाण्यपि पुराणानि आख्यानाख्यायिकाद्युपेतान्येव। तत्कथं भागवतं साररुपं, विशिष्टञ्चेति परिगण्यते। स्कान्दादि शैवपुराणानां सुरद्विषां संशयार्थं निर्मितत्वेन, ब्रह्मवैवर्तादि पुराणानामपि तदर्थमेव निर्मितत्वेन तदपेक्षया आधिक्यं भागवते स्यात्। किन्तु वैष्णवपुराणानीति यानि परिगणितानि तेभ्यः पद्मपुराणादिभ्योऽपि सारवत्वं भागवतस्य कुतः इति संशयो बाधते एव।

तत्सत्यम्। अत्रोक्तलक्षणानि सर्वाण्यपि पद्मपुराणादिष्वपि साधारणान्येव। वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा''[२] इति वचनानुसारात् सर्गादिनवानामपि वर्णनं दशमस्य भगवदाश्रयत्वस्य उपपादनार्थमेव। भगवतः सर्वाश्रयत्वादिकन्तु अनन्यतया निरूप्यते भागवते। न तावत् तादृशं निरूपणं दरीदृश्यते पद्मपुराणादिषु। तथा हि— सृष्टौ च परमाणवः, अदृष्टं, कालः जीवः, स्वाभावश्च कारणत्वेन परिगण्यन्ते। तदभिमानिदेवताश्च वा कारणीभूताः इति निरूप्यन्ते सर्वत्र पुराणेषु। किन्तु तदभिप्रायः स्पष्टीक्रियते भागवते— **''द्रव्यं कर्म कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया''**[३] इति। येषां द्रव्यादीनां सत्तापि भगवदधीना। तादृशानां कर्तृत्वमपि तदधीनमिति किमुत? द्रव्यादीन् निमित्तीकृत्य सर्वानपि सृजति पालयति च भगवान् इति अग्न्यपुराणवचनानां तात्पर्यः स्फुटीक्रियते। इत्येवं तत्र तत्र अन्यपुराणेषु अस्पष्टानि प्रमेयाणि सुस्पष्टं प्रत्यपादि भगवान् व्यासो भागवते इत्यत एव उद्घोष्यते ''पुराणानां साररूप'' इति। ''समाधिनानुसर यद्विचेष्टितम्''[४] इति

---

१. श्रीमद्भागवतम् २/१०/१

२. तदेव २/१०/२...१६

३. तदेव ३/१०/१२

४. तदेव १/५/१३

नारदेन विज्ञापितकार्यो हि पराशरसूनुः भागवतं रचयामास। तथा च समाधिभाषया एव भगवन्माहात्म्यं वर्ण्यतेऽत्र। तथैव ''यथा हरौ भगवति नृणां भक्तिर्भविष्यति। सर्वात्मन्यखिलाधार इति सङ्कल्प्यवर्णय[1] इति चतुर्मुखादेशानुसारादेव नादो भक्त्युद्बुधो यथा स्यात्तथा वर्णितवान् भागवतम्। एतेन भागवतस्य वैशिष्ट्यम् अन्यपुराणापेक्षया सारवत्वञ्च इत्यतः समुचितवचनमिदं ''पुराणानां साररूपः'' इति।

***

१. श्रीमद्भागवतम् २/७/५२

# ऋक्संहितायाम् अतिजगतीच्छन्दसां प्रयोगविमर्शः

**डॉ. पूवाली चक्रवर्ती**

*सहायकाध्यापिका ,संस्कृतविभागः,*

*श्रीरामपुरमहाविद्यालयः, श्रीरामपुरः, पश्चिमवङ्गः*

ऋक्संहितायां प्रयुक्तेषु अतिच्छन्दसु अतिजगती खलु आद्यम्। द्विपञ्चाशदक्षरा अतिजगती तावज् जागतपादत्रयेषु गायर्त्यपादद्वयेषु च निबद्धा। ऋक्संहितायां सप्तदशमन्त्रेषु अस्य प्रयोगः दृग्गोचरो भवति। अस्मिन् शोधबन्धे मया ऋक्संहितायाम् अतिजगतीच्छन्दसः प्रयोगप्रदेशं प्रदर्श्य, यास्ककात्यायनाचार्योक्तदिशा अतिजगतीदेवता– साहचर्य्यं समीक्ष्य, प्राच्यपाश्चात्त्यदृष्ट्या अस्य पादविन्यासप्रकारं यथामति विविच्यान्ते स्वाभिप्रायः।

**कुञ्चीपदानि–** छन्दः, अतिजगती, पादः, अक्षरम्, जागतः, गायर्त्यः, वृत्तसाम्यम्, यतिसाम्यम् इत्यादयः।

**'यत्रार्थवशेन पादव्यवस्था सा ऋक्'**[1] इति जैमिनिवचनात् छन्दोवत्त्वमेव ऋक्त्वमिति ध्वनितम्। तत्र किंलक्षणं छन्दः इति जिज्ञासायामुक्तं कात्यायनेन **'यदक्षरपरिमाणं तच्छन्दः'**[2] इति। तच्च छन्दः द्विविधं वैदिकलौकिकभेदात्। तत्रापि वैदिकं छन्दः मन्त्राक्षरसंख्यया निरूप्यते। तानि च अक्षराणि पादविन्यस्तानि सन्ति। छन्दोभेदेन मन्त्राणाम् अक्षरसंख्या तथा पादसंख्या भिन्नतां धत्ते।

मन्त्रेषु ऋषिभिः प्रयुक्तानि छन्दांसि आर्षच्छन्दसभिधानि। गायर्त्यादिजगत्यन्तानि बाहुल्येन प्रयुक्तानि सप्त छन्दांसि वृहच्छन्दांसि तथा अतिजगत्याद्युत्कृत्यन्तानि चतुर्दशच्छन्दांसि अतिच्छन्दांसि इत्युच्यन्ते। तत्र अतिच्छन्दसाम् आद्यं तावत् अतिजगती। तल्लक्षणमुक्तं ऋक्प्रातिशाख्ये **'प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा'**[3] इति।

---

१. जैमिनीसूत्रम् २/१/३५

२. सर्वानुक्रमणी परिभाषा २/६

३. ऋक्प्रातिशाख्यम् १६/५३

प्रस्तुते अस्मिन् शोधबन्धे मया ऋक्संहितायाम् अतिजगतीच्छन्दसः प्रयोगवैशिष्ट्यमालोचयिष्यते।

**अतिजगतीप्रयोगप्रदेशः**

ऋक्संहितायां साकल्येन सप्तदशमन्त्रेषु अस्य प्रयोगः दृग्गोचरो भवति। तत्र वामदेवेन चतुर्थमण्डलान्तर्गते त्रिष्टुप्प्रधाने आद्ये सूक्ते आदितस्त्रिषु मन्त्रेषु अतिच्छन्दसां प्रयोगावसरे द्वितीये मन्त्रे (ऋ.स. ४/१/२) अतिजगत्याः प्रयोगः व्यधायि। अष्टममण्डलस्य महापङ्क्तिप्रधाने श्यावाश्वर्षके सूक्ते (ऋ.स. ८/३७/१) प्रोक्तं छन्दः प्रारम्भं सूचयति।

क्वचित् क्वचित् प्रोक्तं छन्दः अन्तमपि सूचयति। अत्रिणा तु त्रिष्टुप्प्रधानसूक्तावसाने षोडशसप्तदशमन्त्रयोः (ऋ.स. ५/४१/१६–१७) एतच्छन्दः प्रयुक्तम्। जगतीप्रधाने सूक्ते वशिष्ठेन अन्तिमे मन्त्रे (ऋ.स. ४/५०/४) अस्य प्रयोगः कृतः अन्तसूचकत्वेन।

बहुच्छन्दस्के सूक्ते अपि अस्य प्रयोगः दृक्पथमुपयाति। ऋषिणा संयुना तथा रेभेन तु तद्दृष्टेषु बहुच्छन्दस्केषु सूक्तेषु (ऋ.स. ६/४६/१५ ऋ.स. ८/१७/१०, १३) अस्य प्रयोगः कृतः।

केवलमृषिणा एवयामरुता एव निखिलमेकं सूक्तं (ऋ.स. ५/८७/१–६) प्रस्तुतेन छन्दसा निबद्धम्।

**देवानामतिजगतीसाहचर्यपर्यालोचनम्**

**शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशस्तोमो रैवतं सामेति द्युभक्तीनि**[1] इति प्रस्तुतयास्कीयवचनात् द्युस्थानीयदेवानां अतिच्छन्दस्साहचर्यमस्ति इति ज्ञायते। परन्तु तन्मतं न निर्दुष्टम्। कथमिति चेदत्रेदं वक्तुं शक्यं यत् आतिजगतेषु मन्त्रेषु अस्य नियमस्य व्यभिचारो दृश्यते। केवलम् वैश्वदेवीयमन्त्रौ विहाय अन्येषु सर्वेषु आतिजगतेषु मन्त्रेषु पृथ्व्यन्तरीक्षस्थानीयदेवाः स्तुताः दृश्यन्ते। **प्राजापत्या त्वतिच्छन्दाः**[2] इति शौनकविहितम् अतिच्छन्दसां प्रजापतिदेवताकत्वं नोपपद्यते आतिजगतैर्मन्त्रैः।

---

१. निरुक्तम् ७/११

२. ऋक्प्रातिशाख्यम् १७/७

## पादविन्यासवैचित्र्यम्

ऋक्प्रातिशाख्ये अतिजगतीलक्षणे अक्षरसंख्या यद्यपि निरूपिता परन्तु पादविन्यासः कथंकारो भवेदिति विषये किमपि नोक्तम्। पादा अतिजगत्यां तु त्रयो द्वादशकाः परौ अष्टकौ (पा.वि.३) इति पादविधानोक्तम् अतिजगतीलक्षणम् इति। अर्थात् अतिजगत्यां पादेषु त्रयं जागतं तथा द्वयं गायत्र्यं भवति। इदानीं सप्तदशानाम् आतिजागतमन्त्राणां पादविन्यासप्रकारः पर्यालोचयिष्यते। पादविभाजनं पुनः ऋक्प्रातिशाख्योक्तम् अधिप्रायोऽर्थवृत्तं प्रदर्शयिष्यते।[१]

प्रायः पदं सन्निकृष्टपादाक्षरसंख्याबोधकम्, अर्थस्तु वाक्यार्थपूर्तिबोधकं, वृत्तपदेन तु पादान्ते गुरुलघुक्रमः केवलं बोध्यते न तु लौकिकं वृत्तम्।पाश्चात्यछान्दसिकेन म्याक्डोनलेनपादानां छन्दोनिर्णयावसरे पादान्तगुरुलघुक्रमविचारः, दीर्घपादानांछन्दोनिर्णयावसरे यतिनिचारोऽपि विहित इति दृश्यते।[२] प्रयोजनानुसारेण उभे मते समीक्ष्यैव पादविन्यासप्रकारःप्रदर्शयिष्यते।

प्र वो महे *मतयो यन्तु विष्णवे–१२
मरुत्वते *गिरिजा एवयामरुत्। –१२
प्र शर्धाय *प्रयज्यवे सुखादये–१२
तवसे भन्ददिष्टये–८
धुनिव्रताय शवसे।। –८[३]

इत्यत्र पादविधानोक्तः पादविन्यासो यथायथं रक्षितः। अत्र त्रिषु जागतपादेषु अन्ते वृत्तसादृश्यं यथा परिलक्ष्यते तथा यतिसादृश्यमपि चतुर्थाक्षरादूर्ध्वं तत्सत्त्वात्। किञ्च द्वयोः गायत्र्यपादयोः अन्ते यद्यपि वृत्तं नानुरूपं तथापि उपान्तिमाक्षरे सदृशे लघुनी।

---

१. प्रायोऽर्थो वृत्तमित्येते पादज्ञानस्य हेतवः।
विशेषसन्निपाते तु पूर्वं पूर्वं परं परम्।। (ऋक्प्रातिशाख्यम् १७/१६)

२. Macdonell 1997:p 436

३. ऋग्वेदः ५/८७/१

स भ्रातरं *वरुणमग्ने आ ववृत्स्व १३
देवाँ अच्छा* सुमती यज्ञवनसं १२
ज्येष्ठं यज्ञवनसम्। ७
ऋतावान *मादित्यं चर्षणीधृतं १२
राजानं चर्षणीधृतं।।[1] ८

इत्यस्मिन् मन्त्रे साकल्येन द्विपञ्चाशत् अक्षराणि सन्ति। परन्तु पादाक्षरसंख्या न छन्दः शास्त्रसम्मता। प्रथमं पादं न द्वादशाक्षरं किन्तु त्रयोदशाक्षरमेव। एवं तृतीयमपि अष्टाक्षरं न किन्तु सप्ताक्षरमेव। तृतीयपादे ज्येष्ठमित्यत्र व्यूहेन एकाक्षरवृद्धिर्यद्यपि शक्यसंभवा तथापि तथा सति मन्त्राक्षरवृद्ध्यापत्तिः दुर्वारा स्यात्। अत्रेदमुल्लेख्यं यत् प्राच्यमते प्रस्तुते मन्त्रे द्विपञ्चाशदक्षरसत्त्वात् अतिजगतीलक्षणमुपपद्यते। परन्तु पाश्चात्त्याः विकृतचरणत्वात् मन्त्रे अतिजगतीलक्षणम् अनियमितमिति आमनन्ति। जागतगायत्र्यपादेषु अक्षरसादृश्याभावात् वृत्तसाम्यप्रदर्शनमशक्यमेव। किन्तु जागतपादेषु तुरीयस्य यतिमत्त्वात् तत्साम्यमस्ति। किञ्च जागतगायत्र्यपादान्ते यज्ञवनसम् चर्षणीधृतम् इति पदयोरावृत्त्या स्वरगतम् ऐकतानं विसृष्टम्।

तमिन्द्रं जोहवीमि मघवान–११
मुग्रं सत्रा दधान–७
मप्रतिष्कृतं शवांसि।८
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्तद् १३
राये नो विश्वा सुपथा कृणोतु वज्री।।[2] १३

अस्मिन् मन्त्रे पादविधानमनुसृत्य पादविभाजनं न शक्यसम्भवम्। अत्र एकस्मिन् जागते पादे एकाक्षरन्यूनता यथा तथैव द्वयोः पादयोः एकाक्षरवृद्धिरपि दृश्यते। किञ्च शिष्टे द्वे गायत्र्यपादे अपि न समाक्षरे। एकं सप्ताक्षरम् अपरं च अष्टाक्षरम्। एवं पादेषु अक्षरसाम्याभावात् वृत्तद्वारा गुरुलघुक्रमो दुर्निरूप्य एव। परन्तु प्रसङ्गेऽस्मिन् प्राच्याः प्रायस्त्वमाश्रित्य

---

१. ऋग्वेदः ४/१/२
२. तदेव ८/१७/१३

तद्विभाजनमुपपादयन्ति। पाश्चात्त्याः तन्नामनन्ति। तस्मात् तद्दृशा मन्त्रोऽयं विकृतचरणः भवति।

एवं सन्ति केचित् मन्त्राः यत्र चरणेषु अक्षरन्यूनता यद्यपि वर्तते तथापि व्यूहाद्याश्रयणात् तदपूर्तिं पूरयितुं शक्यते—

स चक्रमे* महतो निरुरुक्रमः १२
समानस्मात्* सदस एवयामरुत्। १२
यदायुक्त* त्मना स्वादधि ष्णुभि – ११ (१२)
विष्पर्धसो विमहसो ८
जिगाति शेवृधो नृभिः।।[१] ८

अस्मिन् मन्त्रे तृतीयचरणे स्वादधि इति पदं व्यूहेन सुवादधित्वेन पठित्वा एकाक्षराभावपूर्तिः शक्या। किञ्च त्रिषु जागतपादेषु अन्ते, गुरुलघुक्रमानुरूप्यं यद्यपि न दृग्गोचरीभवति परन्तु तुरीयाक्षरयतित्वानुरूप्यमस्ति। गायत्र्यपादयोरन्ते यद्यपि वृत्तं नानुरूपं तथापि उपान्तिमाक्षरे सदृशे लघुनी।

स्वनो न वो* ऽमवान् रेजयद्वृषा ११ (१२)
त्वेषो ययि* स्तविषो एवयामरुत्। १२
येना सहन्त* ऋञ्जत स्वरोचिषः १२
स्थारश्मानः हिरण्यया ८
स्वायुधास इष्मिणः।।[२] ८

अस्मिन् मन्त्रे प्रथमे पादे वोऽमवान् इत्यत्र अभिनिहितसंहितायां वो इत्यस्य छान्दसत्वमास्थाय वो अमवान् इति पाठं विधाय पञ्चमे पादे च स्वायुधासपदे क्षैप्रसन्धिं विश्लिष्य सु आयुधास इति पठित्वा एकाक्षरलाघवः कल्पितः प्राच्यैः। जागतपादेषु गुरुलघुक्रमानुरूप्यं यद्यपि अस्ति परन्तु यतिसाम्यं नास्ति। गायत्र्यपादयोस्तु गुरुलघुक्रमानुरूप्यं वर्तते।

अपारो हि* महिमा वृद्धशवस—१२
स्त्वेषं शवो* ऽवत्वेवयामरुत्। १० (१२) (एवयामरुत्)

---

१. ऋग्वेदः ५/७४/४
२. तदेव ५/८७/५

स्थातारो हि* प्रसितौ संदृशि स्थन १२
ते न उरुण्यया निदः ८
शुशुक्वांसो नाग्नयः।। ७ (८) (न अग्नयः)[१]

इति मन्त्रेऽस्मिन् द्वितीयपादे शवोऽवत्वेवयामरुत् इत्यत्र यथाक्रमेण अभिनिहितक्षैप्रसंहिते विश्लिष्य शवो इत्यस्य छान्दसत्वमास्थाय च शवो अवतु एवयामरुत् इत्येवं पठनेन द्व्यक्षराभावपूर्तिः, अपिच अन्तिमे नाग्नयः इति प्रश्लिष्टसंहितां विश्लिष्य न अग्नयः इति पाठं विधाय एकाक्षराभावपूर्तिः शक्या। जागतपादेषु वृत्तसादृश्यं नास्ति, किन्तु यतिसाम्यमस्ति चतुर्थाक्षरादूर्ध्वं तत्सत्त्वात्। गायत्रयोस्तु वृत्तसाम्यं सुस्थिरं दृश्यते।

ते रुद्रासः* सुमखा अग्नयो यथा १२
तुविद्युम्ना* अवन्त्वेवयामरुत्। ११ (१२) (एवयामरुत्)
दीर्घं पृथु* पप्रथे सद्म पार्थिवं (१२)
येषामज्मेष्वा महः ७ (८) (षु आ महः)
शर्धांस्यद्भुतैनसाम्।।[२] ७ (८)

अत्र त्र्यक्षरन्यूनतां विहाय पादविन्यासः प्रायेण पादविधानसम्मतः। तदपि अक्षरन्यूनत्वं द्वितीये पादे अवन्त्वेवयामरुत् इत्यत्र क्षैप्रसंहिताविश्लेषाद् अवन्तु एवयामरुत् इति, तृतीयपादे अज्मेष्वा इति पुनः क्षैप्रसंहिताविश्लेषाद् अज्मेषु आ इति, अन्तिमे पादे च शर्धांस्यद्भुतैनसाम् इति प्रश्लिष्टपदं विश्लिष्य शर्धांसि अद्भुतैनसाम् इति पठित्वा पूरयितुं शक्यते। जागतगायत्र्यपादयोः वृत्तसादृश्यात्, अपि च जागतपादेषु चतुरक्षरात् परं यतिसाम्यात् मन्त्रेऽस्मिन् श्रुतिमाधुर्यं संसृष्टम्।

अद्वेषो नो* मरुतो गातुमेतन १२
श्रोता हवं* जरितुरेवयामरुत्। १२
विष्णोर्महः* समन्यवो युयोतन १२
स्मद्रथ्यो न दंसना – ७ (८)

---

१. तदेव ५/८७/६
२. ऋग्वेदः ५/८७/७

प द्वेषांसि सनुतः ।।[1] ७ (८)

इत्यत्र द्व्यक्षरन्यूनत्वं तुरीयपादे रथ्यो इत्यस्य व्यूहेन रथियो इति पठनात्, अपिच दंसनाप इत्यत्र प्रश्लेषं विश्लिष्य दंसना अप इति पठनात् यद्यपि निवार्यम् परन्तु जागतपादेषु, गायत्र्यपादयोः वृत्तानुरूप्यं नास्ति। जागतेषु यतिसाम्यं तुरीयाक्षरात् परं तत्सत्त्वात्।

त्वेषं शर्धो* न मारुतं तुविष्यण्य – १२ (तं तुविष्यणि)
नर्वाणं* पूषणं सं यथा शता। ११ (१२)
स सहस्रा* कारिषच्चर्षणिभ्य आँ १२
आविर्गुळ्हा वसू करत् ८
सुवेदा नो वसू करत् ।।[2] ८

इत्यस्मिन् मन्त्रे तुविष्यण्यनर्वाणं क्षैप्रसंहिताबद्धपदद्वयं विश्लिष्य तुविष्यणि अनर्वाणम् इति पठनाद् एकाक्षरपूर्तिर्जायते। आद्ये जागतपादे अन्त्याक्षरे लघुत्वे उपेक्षिते जागतेषु वृत्तसाम्यं जायते, तदस्ति गायत्र्ययोरपि। जागतेषु तुरीयाक्षरे यतिसत्त्वात् तत्साम्यं च।

प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ ११ (१२) (र्येषु आविथ)
प्र सुन्वतः शचीपत ८
इन्द्र विश्वाभिरूतिभिः। ८
माध्यंदिनस्य सवनस्य वृत्रह– १२
न्ननेद्य पिबा सोमस्य वज्रिवः ।।[3] ११ (१२)

इति मन्त्रे द्व्यक्षरन्यूनत्वं प्रथमपादे वृत्रतूर्येष्वाविथ इत्यत्र क्षैप्रसन्धिं विश्लिष्य वृत्रतूर्येषु आविथइति पाठेन, अन्तिमपादे च अनेद्य इति व्यूहेन अनेदिय इति पाठेन पूर्यते। आद्ये जागते, आद्ये गायत्र्ये च पादे अन्त्याक्षरे लघुत्वे स्वीकृते जागतेषु गायत्र्ययोश्च वृत्तसाम्यं भवेत्। किन्तु जागतेषु यतिसादृश्यं नास्ति।

---

१. तदेव ५/८७/८
२. तदेव ६/४८/१५
३. ऋग्वेद ५८/३७/१

अपिच सन्ति केचिन्मन्त्राः, यत्र चरणेषु अक्षरन्यूनत्वं कथमेव न पूरणीयम्। यथा–

प्र ये जाता महिना ये च नु स्वयं १२
प्र विद्मना ब्रुवत एवयामरुत्। १२
क्रत्वा तद्वो मरुतो नाधृषे शवो १२
दाना मह्ना तदेषा–७
मधृष्टासो नाद्रयः।।[1] ७ (८)

अस्मिन् मन्त्रे अन्तिमपादे नाद्रयः इत्यत्र प्रश्लेषमास्थाय न अद्रयो इति पाठेन एकाक्षरपूर्तिः यद्यपि शक्यसम्भवा तथापि तुरीयपादे एकाक्षरपूर्तिरशक्या एव। एवम् एकाक्षरन्यूनत्वात् प्राच्या एनम् निचृदतिजगतीत्वेन आमनन्ति, पाश्चात्त्याः पुनः अनियतातिजगतीत्वेन स्वीकुर्वन्ति।

गन्ता नो यज्ञं यज्ञियाः सुशमि ११
श्रोता हवमरक्ष एवयामरुत्। १२
ज्येष्ठांसो न पर्वतासो व्योमनि ११
यूयं तस्य प्रचेतसः ८
स्यात दुर्धर्तवो निदः।।[2] ८

इत्यत्रापि पूर्वमन्त्रवत् तृतीयपादेज्येष्ठांसो इति व्यूहेन जियेष्ठांसो इति पाठेन एकाक्षरपूर्तिः शक्यसम्भवा। परन्तु आद्ये चरणे सा अशक्या एव। इयमपि तावत् प्राच्यानां मतेन निचृदतिजगती, पाश्चात्त्यानां मतेन पुनः अनियतातिजगती एकाक्षरन्यूनत्वात्।

प्र ये दिवो बृहतः शृण्विरे गिरा १२
सुशुक्वानः सुभ्वः एवयामरुत्। ११ (१२)
न येषामिरी सधस्थ ईष्ट आँ ११

---

१. तदेव ५/८७/२
२. ऋग्वेदः ५/८७/६

अग्नयो स्वविद्युतः ७ (८)

प्र स्पन्द्रासो धुनीनाम्।।[१] ७

इत्यत्र द्वितीये चरणे सुभ्वः इति व्यूहात् सुभुवः इति पाठेन एकाक्षरपूर्तिः यद्यपि जाता परन्तु तृतीये अन्तिमे पादे च साकल्येन द्व्यक्षरपूपणमशक्यमेव। एवम् द्व्यक्षरन्यूनत्वात् प्राच्या एनम् विराजतिजगतीत्वेन आमनन्ति, पाश्चात्त्याः पुनः अनियतातिजगतीत्वेन स्वीकुर्वन्ति।

विश्वा पृतना अभिभूतरं नरं १२

सजूस्ततक्षुरिन्द्रं ७

जजनुश्च राजसे। ७

क्रत्वा वरिष्ठं वर आमुरिमुतो— १२

ग्रमोजिष्ठं तुवसं तरस्विनम्।।[२] ११ (१२)

इति पूर्वमन्त्रवद् अत्रापि अन्तिमे जागतपादे तरस्विनम् इति व्यूहात् तरसुविनम् इत्येवं पठित्वा एकाक्षरपुर्तिः यद्यपि शक्यसम्भवा परन्तु गायत्र्ययोः साकल्येन द्व्यक्षरलाघवम् अनिवार्यम्। एतदपि तावत् प्राच्यानां मतेन विराजतिजगती, पाश्चात्त्यानां मतेन पुनः अनियतातिजगती द्व्यक्षरन्यूनत्वात्।

कथा दाशेम नमसा सुदानूनेवया मरुतो अच्छोक्तौ प्रश्रवसा अच्छोक्तौ।

मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः।।[३]

अस्मिन् मन्त्रे पादविधानानुसारि पादविभाजनं विधीयते चेत् विन्यासः इत्त्थं भवति— ८+१२+१० (११) +११ (१२)+७। अस्मिन् विन्यासे अन्तिमे चरणे आर्थिकं विभाजनं न शक्यम्। किञ्च तृतीयतुरीयचरणयोः संहिताविश्लेषेण द्व्यक्षरपूरणे कृतेऽपि द्व्यक्षरन्यूनत्वं परिलक्ष्यते। परन्तु तदकृत्वा ११+६ (१०)+१० (११) + ८(१०)+१० इति विन्यासो यदि स्वीक्रियते तदा आर्थिकं विभाजनं शक्यसम्भवम्। किञ्च द्वितीयतृतीयचरणयोः अच्छोक्तौ इत्यत्र विश्लिष्य अच्छा उक्तौ इति, चतुर्थपादे च नोऽहिर्बुध्न्यो इत्यत्र अभिनिहितसन्धिं

---

१. तदेव ५/८७/३

२. तदेव ८/६७/१०

३. तदेव ५/४१/१६

विश्लिष्य बुध्यो इत्यत्र व्यूहद्वारा नो अहिर्बुध्नियो इति पाठश्च स्वीक्रियते चेत् चतुराक्षराभावपूर्तिः शक्यते। एवं त्रैष्टुभे पादे यद्यपि वृत्तसाम्यमस्ति परन्तु वैराजपादे तन्नास्ति। अत्रेदमुल्लेख्यं पादविन्यासो यद्यपि न पादविधानसम्मतस्तथापि मन्त्राक्षरन्यूनतापूरकत्वात् तद्विन्यासप्रकारः उचित इति।

इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ देवासो वनते मर्त्यो वः ।

**अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत।।**[1]

अत्र पादविधानदिशा पादविभाजनं विधीयते चेत् पदविन्यासः इत्थं स्यात्–११+६+१०+१२+६। अत्र एकाक्षरन्यूनता परिलक्ष्यते। परन्तु आद्ये एकादशाक्षरे पादे पशुमत्यै इत्यत्र व्यूहेन पशुमतियै इति पाठं प्रकल्प्य एकाक्षरन्यूनत्वं वारयितुं शक्यम्। एवं परिहृतायामपि न्यूनतायां एतादृशो जागतवैराजगायत्र्यपादविन्यासः छन्दश्शास्त्रासम्मतत्वात् सामञ्जस्यं न धत्ते। तदपेक्षया ११+१०+१०+१०+११ इति विन्यासो बाहुल्यात् रम्यमिति प्रतिभाति। पूर्वाम्नाते मन्त्रे एतादृशो विन्यासो युक्तियुक्त इति पूर्वमेव उल्लिखितम्। तस्मात् अस्मिन् मन्त्रे अनुरूपो विन्यासप्रकारः अत्रेः समभिप्रेत इति प्रतिभाति।

या प्रवतो निवत उद्वत
उदन्वतीरनुदकाश्च याः।
ता अस्मभ्यं पयसा पिन्वमानाः
शिवा देवीरशिपदा भवन्तु
सर्वा नद्यो अशिभिदा भवन्तु।।[2]

अत्रेदमुल्लेख्यं यत् सर्वानुक्रमणीग्रन्थे प्रस्तुतो मन्त्रो वैकल्पिकतया अतिजगतीशक्वर्यन्यतरयुतत्वेन निर्दिष्टः। एवमत्रत्यः पादविन्यासः पादविधानविलक्षण एव– १०+१०+११+११+११ इति। अत्र एकाक्षरवृद्धिः

---

१. ऋग्वेदः ५/४१/१७
२. तदेव ७/५०/४

दृक्पथमेति। तस्मात् पाश्चात्त्याः एनम् अनियमितातिजगतीत्वेन अभिप्रयन्ति। परन्तु प्राच्यास्तु तन्मतं नामनन्ति। ते अत्र अक्षरभौर्यात् तत् भूरिजगतीत्वेन ख्यापयन्ति।

उपर्युक्तविषयपर्यालोचनेन एतदवसीयते यद् अखिलायां दाशतय्याम् कतिपयेषु मन्त्रेषु अस्य अतीजगतीच्छन्दोप्रयोगः अस्माभिः परिलक्ष्यते। एवयामरुतं विहाय सर्वे ऋषयः गौणतया अस्य प्रयोगमकार्षुः। परवर्तिकाले देवातिच्छन्दोनिष्ठसम्बन्धविषये यास्काचार्येण तथा शौनकेन यदुक्तं तदाधारीकृत्य यदि निखिलानि स्थलानि विचार्यन्ते तर्हि एकं विहाय समेषु स्थलेषु अतिजगतीव्यभिचारः परिलक्ष्यते एव। किञ्च अस्माभिः द्विधः पादविन्यासः परिलक्ष्यते– (१) १२+१२+१२+८+८ (२) ११+११+१०+१०+१० चेति। परन्तु पादेषु बाहुल्येन अक्षराधिक्यं यथा वर्तते तथा न्यूनत्वमपि। क्वचित् क्वचित् व्यूहाद्याश्रयणात् अक्षरासामञ्जस्यं यद्यपि विदूरितं परन्तु समेषु स्थलेषु तन्न जातम्। क्वचित् क्वचित् मन्त्रोच्चारणकाले गुरुलघ्वानुपूर्विकत्वात् गुरुबाहुल्यात् अक्षराभावः व्यपगतः।

एवं सत्यपि छन्दोव्यत्यये अत्रेदं वक्तुं शक्यं यद् ऋषयो मन्त्रद्रष्टारः। ते यथा मन्त्रान् दृष्टवन्तः तथैव तान् मन्त्रान् शिष्यान् श्रावितवन्तः। एवं श्रुत्या गुरुशिष्यपरम्परया रक्षिताः मन्त्राः काले लिपिवद्धाः जाताः। तेषु मन्त्रेषु काले छन्दांसि कल्पितानि। तानि कल्पितानि छन्दांसि आधारीकृत्य यदि वयं मन्त्रान् पर्यालोचयामः तर्हि क्वचित् क्वचित् व्यत्ययो भवेदेव। कथमिति चेदत्रेदं वक्तव्यं भाषा यथा व्याकरणात् पूर्वभाविनी तथैव छन्दः शास्त्रादपि। भाषामाश्रित्य व्याकरणं यथा लिखितं तथैव पद्यात्मकानि वैदिकसूक्तानि दृष्ट्वा तेषु छन्दांसि अपि कल्पितानि। कल्पितेषु व्यत्ययाः स्युरेव। ते च व्यत्ययाः लक्ष्यैकचक्षुष्कैः प्राच्यैः छान्दसिकैः व्यूहाद्याश्रयणात् क्वचित् स्खालिताः क्वचिच्च निचृदादिवैशिष्ट्यं छन्दः सु प्रकल्प्य साधुत्वं संरक्षितम्। परन्तु पाश्चात्त्याः प्रसङ्गे अस्मिन् विलक्षणाः। ते छन्दांसि आधारीकृत्या मन्त्रान् व्याचक्षुः। मन्त्रव्याख्यानावसरे लक्षणैकचक्षुष्काः सन्तः ते क्वचित् छन्दसाम् अनियमितनियमितभेदेन द्वैविध्यं कल्पितवन्तः। क्वचित् ते अक्षरन्यूनत्वं गुरुलघ्वानुपूर्वीजन्यलयचमत्कारेण छादितमिति अभिप्रयन्ति इति प्राच्यपाश्चात्त्यमतविवेक इति शम्।

# तात्पर्यार्थोऽपि केषुचिदिति मम्मटोक्तेस्तात्पर्यविचारः

**डॉ. देवनाथ–पालः**

*सहायकाध्यापकः, संस्कृतविभागः,*

*श्रीरामपुरमहाविद्यालयः, श्रीरामपुरः, पश्चिमवङ्गः*

आचार्येण मम्मटेन तदीये काव्यप्रकाशे शब्दार्थवृत्तिभेदनिरूपणावसरे तात्पर्यार्थस्यापि सत्त्वमुद्घोषयता तात्पर्यार्थोऽपि केषुचिदिति प्रोक्तम्। तत्र वृत्तौ व्याख्यानावसरे तेन तस्य अभिहितान्वयवादिमतत्वेनोल्लेखो व्यधायि। परन्तु तन्मतमपसिद्धान्तत्वेन दूषितं गौरीनाथशास्त्रिप्रमुखैराचार्यैः। किञ्च विशिष्टनैयायिकाचार्येण रामानुजताताचार्येण तत्कृतायां शाब्दबोधमीमांसायां तात्पर्यपदस्य अन्यथाव्याख्यानं विधाय तात्पर्यस्य वृत्तित्वं निराकृतम्। मया मदीये बन्धे आदौ तात्पर्यस्य वृत्तित्वविषये आलोचनं कृतं तदनु मम्मटमतं युक्तियुक्तं न वा इति विषये यथामति सोपपत्तिकमालोचनं कृतम्।

**उपोद्घातः**

प्रस्तुतेयमुक्तिः आचार्यमम्मटस्य। तेन तदीये काव्यप्रकाशे द्वितीयोल्लासे शब्दार्थवृत्तिभेदनिरूपणावसरे प्रोक्तमेतद्वचनम्। वाच्यादिवत् तात्पर्यार्थोऽपि कैश्चित् स्वीक्रियते इति खलु तदाशयः। एवं तात्पर्यस्यापि वृत्तित्वमस्ति तच्च अभिहितान्वयवादिसम्मतमेव इति खलु मम्मटभट्टानामाशयः। तदुक्तं काव्य प्रकाशे द्वितीयोल्लासे "तात्पर्यार्थोपि केषुचित्।। **आकाङ्क्षा योग्यता संनिधि वशाद्वक्ष्यमाण स्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थः अपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्"**[१] इति। जात्यादिस्वरूपाणां पदवृत्तिविषयाणामर्थानां परस्परसम्बन्धे बुभुत्सिते तात्पर्याख्यवृत्तिप्रतिपाद्यः वाच्याद्यर्थविलक्षणः संसर्गात्मकः वाक्यार्थः अनुभवविषयो भवतीति तदर्थः। तदाशयं प्रकटयन्नाह गोविन्दठक्कुर काव्यप्रदीपे– "लाघवात् पदानां पदार्थमात्रे शक्तिर्न त्वन्वयांशे अपि, गौरवादन्यलभ्यत्वाच्च। तदंशो हि तात्पर्यार्थः वाच्याद्यर्थविलक्षणशरीरः

---

१. काव्यप्रकाशः, द्वितीयोल्लासः (दिल्लीः, नागप्रकाशनम्, १९९५) पृ– १९६

आकांक्षा योग्यता सत्तिवशाद पदार्थोऽपि प्रतीयते। न चापदार्थप्रतीतावतिप्रसङ्गः। स्वरूपसतः शक्यान्वयत्वस्य नियामकत्वाद् इत्यभिहितान्वयवादिनां मतम्"[२] इति। अनेन पदवृत्त्यविषयं संसर्गं वाक्यनिष्ठतात्पर्याख्या वृत्तिर्बोधयतीति अभिहितान्वयवादिनां पक्ष इति मम्मटाशयः प्रतीयते।

**मीमांसकमते अभिहितान्वयवादविचारः**

परन्तु अत्रेदमुल्लेख्यं यद् अभिहितान्वयवादिभिः कुमारिलभट्टपादैः स्वकण्ठरवेन न कुत्रापि तात्पर्यस्य वृत्तिरूपेणोल्लेखः कृतो न वा तात्पर्याख्यवृत्तिगम्यत्वं वाक्यार्थस्योक्तम्। तर्हि कथं मम्मटेन तात्पर्यस्य वृत्तित्वमभिहितान्वयवादिसम्मतमित्युक्तमिति चेदत्रेदं वक्तव्यं यत् कुमारिलभट्टः खलु अभिहितान्वयवादी इत्यस्मिन् विषये नास्ति कश्चित् संशयलेशावसरः। तथाहि अभिहितान्वयवादावतरणावसरे तेन तदीये श्लोकवार्तिके प्रोक्तं यत्—

**"नविमुञ्चन्ति सामर्थ्यं वाक्यार्थे अपि पदानि च।**
**तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते।।"[३]**

**पुनश्चोक्तं तत्रैव तेन वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्।।"[४]**

परन्तु तदीयमिदं वक्तव्यं तदनुयायिभिः पुन स्वस्वमतानुरोधेन व्याख्यातम्। तेषु केचिद् एवमभिप्रयन्ति यत् यद्यपि पदानि परम्परया अन्वितप्रतिपत्तिहेतुभूतानि भवन्ति तथापि तानि पदार्थप्रतिपादनमात्रेणा—वसितानि भवन्ति। अभिहिताः पदार्था एव वाक्यार्थं गमयन्तीति। पदेषु वाक्यार्थावगमशक्तेः तात्पर्याख्यशक्तेस्तदभिमतत्वे तन्मात्रावसितेषु इति कथनं न संगच्छते। पदार्थप्रतिपादनं नान्तरीयकम् इत्युक्तेरपि नायमाशयः, यत् पदानि पदार्थप्रतिपादनद्वारा वाक्यार्थं गमयन्ति इति। अपि तु पदैरभिहिता एव पदार्था वाक्यार्थं गमयन्तीति वाक्यार्थमितेः शाब्दत्वोपपादने तात्पर्यं

---

२. काव्यप्रकाशः, द्वितीयोल्लासः (दिल्लीः, नागप्रकाशनम्, १९९५) पृ— १७६
३. श्लोकवार्तिकम्, वाक्य, २२९ (वाराणसीः, तारा पाबलिकेशन्, १९७८)
४. तदेव, वाक्य, २२९ (वाराणसीः, तारा पाबलिकेशन्, १९७८) पृ— ६६४

भट्टपादानाम्। अत एव– **"पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तः वाक्यार्थं गमयन्ति।"**[५] इति भाष्यं संगच्छते। एवञ्च पदार्थो वाक्यार्थं लक्षणया बोधयति। तत्र तात्पर्यज्ञानं सहकारि भवतु नाम। न तावता तात्पर्यवृत्त्या वाक्यार्थो बोध्यते इति।

तथा च कथं तात्पर्याख्यवृत्तेः भाट्टाभिमतत्वोक्तिः संगच्छते इति चेदत्रेदं वक्तव्यं प्रसङ्गेऽस्मिन् पार्थसारथिमिश्र एव प्रमाणपदवीमध्यास्ते। तेन तात्पर्यस्य वृत्तित्वमभ्यधायि। एवञ्च तन्मते पदानां पदार्थबोधनमात्रेण व्यापारपर्यवसाने वाक्यार्थ बोधस्य शब्दजन्यत्वाभावाद् वाक्यार्थस्याशाब्दत्वापत्तिः दुर्वारा स्यात्। एवं वाक्यार्थस्य शाब्दत्वप्रतिपादनाय तात्पर्यस्यापि वृत्तित्वमभ्युपेयमिति। तदुक्तं तेन मीमांसान्यायरत्नाकरे– **"पदार्थमात्रस्य प्रमाणान्तरसिद्धत्वात् तन्मात्रप्रतिपादनं निष्फलम्। अतः पदार्थावसिताभिधाव्यापाराणामपि पदानां तत्रानवसिततात्पर्याणां वाक्यार्थावगतावेव तात्पर्यमिति युक्तं तेषां क्रियार्थेन समाम्नायः"**[६] **इति।**

एवं न्यायसुधाकृता भट्टसोमेश्वरेणापि भावार्थाधिकरणादौ **"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत एष ह्यर्थो विधीयते"**[७] इति सूत्रव्याख्यानावसरे तात्पर्यस्यापि वृत्तित्वमङ्गीकुर्वता प्रोक्तं यत् "गम्यमानाया अपि भावनायास्तद्वाचिनश्चाख्यातस्य अपेक्षया तात्पर्यावगतिरिति तात्पर्यसूचनाय– पेक्षोक्ता। गम्यमानस्यापि तात्पर्यवृत्त्या शाब्दत्वात् सामानाधिकरण्योपपत्तौ कर्त्रधिकरणसिद्धदृष्टान्ताभिधानं तथा भूतयेत्यपेक्षमाणत्वेन तात्पर्यवृत्त्या शाब्दीभूतयेत्यर्थः"[८] इति। एवं कृदन्तशब्दस्थले अवाच्यत्वे अपि भावनायास्तात्पर्यवृत्त्या शाब्दत्वं प्रतिपादयता तेन तात्पर्यस्यापि वृत्तित्वमङ्गीकृतम्।

---

५. मीमांसादर्शनम् (प्रथमो भागः) १/१/२५ (कलिकाताः सारसुधानिधियन्त्रम्) पृ–३८
६. श्लोकवार्तिकम्, वाक्य, २२६ (वाराणसीः, तारा पाबलिकेशन्, १६७८) पृ–६६४
७. मीमांसासूत्रम् २/१/१
८. न्यायसुधा २/१/१, (वाराणसीः, चौखम्बा संस्कृत बुक डिपो, १६०१) पृ–५७२–५७३

आचार्यखण्डदेवः मीमांसाकौस्तुभे स्पष्टतरस्तात्पर्याख्यां वृत्तिं स्वीचक्रे लक्ष्यार्थस्य शाब्दत्वप्रतिपादनाय, न तु वाक्यार्थप्रत्यायनायेति तत्प्रकरणतः अवसीयते। तदुक्तं तेन मीमांसाकौस्तुभे आकृत्यधिकरणे **'तदर्थत्वात् प्रयोगस्याविभागः १/३/३५'** इति सूत्रव्याख्यानावसरे" यदपि चार्थस्य लक्षकत्वपक्षे लक्ष्यस्याशाब्दस्य विभक्त्यर्थानन्वय इत्युक्तम्। तदप्यस्मिन् पक्षे तात्पर्याख्यवृत्तिविषयत्वेन शाब्दत्वस्य लक्ष्ये अपि स्थापयिष्यमाणत्वाद–किंचिकरम्।"[९] इति।

अत्रेदमुल्लेख्यं यत् शाब्दबोधप्रयोजकत्वे तात्पर्यस्याभ्युपगतत्वेऽपि तस्य अभिधादिवत्तस्य भिन्नवृत्तित्वविषये विद्यते विमतिः विपश्चिताम्। तात्पर्यस्य पृथग्वृत्तित्वं केवलं जयन्तभट्टेन यथाभ्युपगतं तथैव अभिनवगुप्तेनापि।

## तात्पर्यस्य वृत्तित्वविषये जयन्तभट्टमतम्

तात्पर्यस्य वृत्तित्वं नैयायिकेषु केवलं जयन्तभट्टेनैव तत्कृतायां न्यायमञ्जर्यां प्रत्यपादि। तन्मते पदान्येव तत्प्रतिपादनद्वारेण वाक्यार्थप्रतिपत्तौ पर्यवस्यन्ति। पदानां हि द्वयी शक्तिः अभिधात्री तात्पर्यशक्तिश्च। तत्राभिधात्री शक्तिरेषां पदार्थेषूपयुक्ता। तात्पर्यशक्तिश्च वाक्यार्थे पर्यवस्यतीति। तदुक्तं तेन तत्कृतायां न्यायमञ्जर्यां– "इयं वाचोयुक्तिः पदान्यन्वितंप्रत्याययन्ति, नान्वितमभिदधाति। नाभिधात्री शक्तिरन्वितविषया किन्तु अन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव। तात्पर्यशक्तिस्तु तेषामन्विताव–गमपर्यन्ता सहव्यापारात्। व्यापारस्य चतदीयस्य निराकाङ्क्षप्रत्ययोत्पादन–पर्यन्तत्वात्"[१०] इति। तस्मात्तात्पर्यशक्तिः खलु वाक्यार्थप्रत्यायिकेति जयन्तभट्टाशयः।

## तात्पर्यस्य वृत्तित्वविषये अभिनवगुप्तमतम्

आलङ्कारिकेषु केवलम् अभिनवगुप्तपादेन खलु तात्पर्यस्य

---

९. मीमांसाकौस्तुभः, (वाराणसीः, चौखम्बा संस्कृत सीरिज आफिस, १९९१) पृ–१४६–१५०

१०. न्यायमञ्जरी आ. ६/२ (दरभङ्गाः, कामेश्वरसिंहदरभङ्गासंस्कृत विश्वविद्यालयः, २००६) पृ २९१–२२०

वृत्तित्वमभ्युपगतम्। तथाहि 'तस्माद् घटप्रदीपन्यायस्तयोः' इत्याद्यंशस्य आनन्दवर्धनाचार्योक्तस्य व्याख्यानावसरे लोचने तेन प्रोक्तं– 'एवं पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं प्रकृते विषये निराकृत्याभिमतां प्रकाशशक्तिं साधयितुं तदुचितं प्रदीपघटन्यायं प्रकृते योजयन्नाह–तस्मादिति'[११] इति। इतः प्रागप्यस्मिन्नेव प्रसङ्ग उक्तं– 'नन्वेवं मा भूत् वाचकशक्तिस्तथापि तात्पर्यशक्तिर्भविष्यतीत्याशङ्क्याह न चेति'[१२] इति। एवमेव तात्पर्यशक्तिर्नाम अपरापि शक्तिरभिनवगुप्तेन नामग्रहणेन स्वीकृता। तस्याः स्वरूपन्तु लोचनस्य प्रथमोद्यतत एव समुन्नेयम्। तथाहि– भ्रमधार्मिक इत्यस्मिन् पद्ये भ्रम इति भ्रमणविधिर्वाच्यार्थः। भ्रमणनिषेधस्तु व्यङ्ग्यार्थः। अत्र व्यञ्जनाव्यापार– स्वीकरणासहमानेन पूर्वपक्षेण तात्पर्यशक्तया एव व्यङ्ग्यार्थोऽप्युपलब्धव्य इति वक्तुमभिलष्यते। तदेव पूर्वपक्षमतमभिनवगुप्त एवमुपस्थापयति– 'ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिकतदादिपदार्थानन्वयरूपमुख्यार्थ बाधबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिम– भिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः। एवमनेनोक्तमिति हि व्यवहारः, तन्न वाच्यातिरिक्तोऽन्योऽर्थः'[१३] इति।

अस्य समाधानमुखेनाह– 'नैतत्, त्रयो ह्यत्र व्यापाराः संवेद्यन्ते– पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षयार्थावगमनशक्तिर्ह्यभिधा। समयश्च तावत्येव, न विशेषांशे, आनन्त्याद् व्यभिचाराच्चौकस्य। ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परास्परान्विते, सामान्यान्यथासिद्धेर्विशेषं गमयन्ति हि इति न्यायात्'[१४] इति। तस्मात् प्रथमकक्षायामभिधया सामान्यरूपं पदार्थमात्रं लभ्यते। 'द्वितीयकक्षाया भ्रमेति विध्यतिरिक्तं न किञ्चित् प्रतीयते, अन्वयमात्रस्यैवप्रतिपन्नत्वात्' इति। मुख्यार्थबाधाद्यभावादृते न लक्षणा। तृतीयकक्षायां भ्रमण विध्यतिरिक्ततया यो भ्रमणनिषेधरूपोऽर्थः समुल्लसति स

---

११. ध्वन्यालोकः उद्योतः–३, (दिल्लीः, मोतीलाल बनारसीदासः, १९८१) पृ– ४२१

१२. तत्रैव

१३. ध्वन्यालोकः, प्रथमोद्योतः, (दिल्लीः, नागप्रकाशनम्, १९९५) पृ. ७१

१४. तदेव, प्रथमोद्योतः (दिल्लीः, नागप्रकाशनम्, १९९५) पृ० ८०

तु व्यञ्जनाव्यापारेणैव समुपलभ्य इति भावः। एवं क्रमेण अभिनवगुप्तेन तात्पर्यशक्तिर्नाम शक्तिविशेषो वाक्यार्थबोधनक्षमः स्वीक्रियते।

## गदाधरकर्तृकं तात्पर्यवृत्तित्वनिराकरणम्

किञ्च गदाधरभट्टाचार्येणापि तदीये शक्तिवादे तात्पर्यस्य वृत्तित्वं निराकृतम्। तथाह्युक्तं तत्र तेन "न चाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्गः, तस्यापि बोधकत्वेन पदविषयकतया संकेतरूपत्वात्। न चेष्टापत्तिः, तथा सति लक्षणास्थले अपि तात्पर्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम्। यतः पदार्थोपस्थितिव्यापारकः संकेतो वृत्तिः। तात्पर्यज्ञानञ्च साक्षादेव शाब्दबोधोपयोगि, न तु पदार्थोपस्थितिद्वारा। वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्यावधारणात्। तथा च लक्षणायाः वृत्तित्वानुपगमे गङ्गादिपादात् तीराद्यनुपस्थितौ तत्र तत्पदव्यक्तेः तात्पर्यग्रहाभावात् शाब्दबोधानुपपत्तिरिति तस्याः वृत्तित्वमावश्यकम्। न च तात्पर्यग्रहार्थं लक्षणाधीनोपस्थितेरावश्यकत्वे अपि, लक्षणाधीनोपस्थितित्वेन शाब्दबोधहेतुत्वे मानाभावात् तस्याः वृत्तित्वासिद्धिः" इति।[१५] एवं भावेनतात्पर्यस्यवृत्तित्वंतेननिराकृतम्। अनेन एतत् स्फुटं यत् आसन् केचिद् तात्पर्यवृत्तिवादिनः येषां मतानि तेन पूर्वपक्षरूपेण उपस्थाप्य सोपपत्तिकं निरोंतानि।यदि तन्मतं न स्यात् तर्हि एतावान् महान् प्रयत्नस्तेन कथं कृतः। एवं परोक्षतया तेन तात्पर्यवृत्तिवादस्य अस्तित्वम् अभ्युपगतमिति प्रतीयते।

## गौरीनाथशास्त्रिमतपर्यालोचनम्

एवमुपर्युक्तविषयपर्यालोचनेन तात्पर्यवृत्तिवादस्य ऐतिहासिकत्वं निर्विवादमिति निश्चप्रचं वक्तुं शक्यम्। तदेव मनसि निधाय आचार्यो मम्मटस्तु तात्पर्यार्थोपि केषुचिदित्यस्य व्याख्यानावसरे" तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतमि" ति वाचमाददे। परन्तु अत्र प्रत्यवतिष्ठन्ते केचिद् विशिष्टदार्शनिकाचार्याः। तेषु मौर्धण्यं भजन्ते महामहोपाध्यायाः गौरीनाथ शास्त्रिमहाभागाः। तन्मते तात्पर्योऽपि केषुचित् इत्यादिना मम्माटाचार्येण अपसिद्धान्त एव परिपोषितः। किञ्च तेन तत्र प्रामादिकतया भाट्टाभिमतत्वेन यः खलु अभिहितान्वयवादः प्रतिपादितः स खलु

१५. शक्तिवाद, (वाराणसीः, चौखम्बा संस्कृत सीरिज आफिस, १९८६) पृ. १३–१४

न भाट्टाभिमत एव, किन्तु नैयायिकाभिमत एव। वस्तुतस्तेन मूलं कौमारिलग्रन्थमनवलोक्यैव तात्पर्यवृत्तितत्त्वं प्रत्यपादि। एवञ्च तत्प्रतिपादितः अपसिद्धान्तः परवर्तिषु आलङ्कारिकग्रन्थेषु अनुस्यूत एव। तदुक्तंतेनतदीये **'The Philosophy of Word and Meaning' इत्याख्ये ग्रन्थे– "It is absolutely certain that Mammata has misrepresented the theory of Kumarila which is called A bhihitānvayavāda- Unfortunately he calls what is really the Nyaya theory of the name of the theory of Abhihitānvayavāda- This error has persisted in all the subsequent writings of the Alankarikas - It is pain full to remark that this celebrated authority on poetics did not have dirct access to the work of Kumarila."[१६] इति।**

प्रोक्तं मतं मन्मते न विचारसहम्। कथमिति चेदत्रेदं वक्तव्यं यद् भाट्टा हि अभिहितान्वयवादिनः। विषयेऽस्मिन् नास्ति कश्चित् कस्यापिसंशयलेशावसरः। परन्तु अभिहितान्वयवादप्रदर्शनरीतिः भाट्टमतानुगेषु नाभिन्ना। विषयेऽस्मिन् वर्तते मतद्वयम्। तत्र बीजं खलु वाक्यार्थो लक्ष्यमाणः इति तन्त्रवार्तिकस्थं कौमारिलं वचनम्।

प्रस्तुतवचनान्तः पातिनः लक्ष्यमाणशब्दस्य केचिल् लक्षणावृत्ति लभ्यरूपार्थमभ्युप गच्छन्ति। अपरैस्तु तस्य प्रतिपादयिष्यमाणरूपार्थ एवाङ्गीकृतः। ये पुनः लक्ष्यमाण शब्दस्यलक्षणावृत्तिलभ्यरूपार्थमभ्युपगच्छन्ति तेषां नये पदानि आदौ अभिधादिनास्वीयार्थमभिदधति। ततः पदाभिहिताः पदार्थाः लक्षणया अन्वितवाक्यार्थं बोधयन्ति।

अपरे ये खलु वाक्यार्थस्य लक्षणावेद्यत्वं नाभ्युपगच्छन्ति तेषां नये पदानि शक्त्यादिभिरादौ स्वार्थं बोधयन्ति। ततः पदाभिहितपदार्थाः एव तात्पर्यवृत्त्या अन्वितरूपवाक्यार्थं बोधयन्ति। अनयोराद्यमतानुगाः पार्थसारथिमिश्रादयः, अन्त्यमतानुगास्तावत् भट्टसोमेश्वरादयः केचित्। उपर्युक्तपर्यालोचनद्वारा एतदवसीयते अभिहितान्वयवादिषु भाट्टमीमांसकेषु सन्ति केचित् ये अन्वितवाक्यार्थं तात्पर्यवृत्तिवेद्यतया अभ्युगच्छन्ति।

---

१६. The Philosophy of Word and Meaning (Calcutta: Sanskrit College, 1959) pp 220

न केवलमेतदपि तु शास्त्रिमहाभागानुसारेण भाट्टमीमांसका एवाभिहितान्वयवादिनः न तु नैयायिकाः। परन्तु तदपि न विचारसहम्। कथमिति चेदत्रेदं वक्तव्यं यत् अभिहितान्वयवादी हि कुमारिलभट्ट इति विषये नास्ति कस्यापि कश्चित् संशयलेशावसरः। परन्तु स च प्राचीननैयायिकजयन्त— भट्टानुमतोऽपि। कथमिति चेदत्रेदं वक्तव्यं यत् पदैरभिहितानां पदार्थानां पश्चादन्वय इति ये खलु स्वीकुर्वन्ति ते हि अभिहितान्वयवादिनः। जयन्तभट्टमते पदानि अभिधात्रीशक्त्या केवलं स्वार्थमेवाभिदधति। एवमभिधात्र्यां विरतायां तु पदानितदभिहितपदार्थान् द्वारीकृत्य तात्पर्यशक्त्या अन्वितार्थंबोधयन्ति। तेन पदार्थाभिधानानन्तरेव अन्वयस्य प्रतिपत्तिसम्भवात् जयन्तमतं न हि अभिहितान्वयवादाद्विलक्षणम्। तदेव मनसि निधाय मम्मटेन तदीये काव्यप्रकाशे वाक्यार्थस्य तात्पर्यवृत्तिवेद्यत्वं अभिहितान्वयवाद्यनुमततया उदलेखि। तदाशयमेव परिस्कुर्वता गोकुलनाथोपाध्यायेन तत्कृतविवरणटीकायां केषुचित् इत्यस्य "न्यायवैशेषिकभाट्टशास्त्रेषु"[१७] इत्यर्थः अभ्युपगतः। एवं परमानन्द चक्रवर्तिना तकृतायां विस्तारिकाटीकायामप्यनुरूपमुक्तम् अभिहितान्वयवादपद निर्वचनावसरे— "अभिहितानां स्वस्ववृत्या पदैरुपस्थापितानां वृत्त्यन्तरेणान्वय इति वादिनां प्राचीननैयायिकानां भट्टानाञ्च मतमित्यध्याहार्यमि"[१८] ति। एवं दर्पणटीकायामप्युक्तं विश्वनाथेन— "अभिहितान्वयवादिनां मतमिति। अभिहितानामभिधया लक्षणया वा बोधितानां पदार्थानां पश्चात्तात्पर्याख्येन वृत्त्यन्तरेणान्योन्यान्वयं ये मन्यन्ते नैयायिकादयः तेषां तात्पर्यार्थः पृथगभिमत इति भावः"[१९] इति।

किञ्च विषयोऽयं स्फुटं येन प्रत्यपादि स खलु हरिदाससिद्धान्तवागीश— महाभाग एव। तेन कण्ठरवेण प्राचीननैयायिकानामभिहितान्वयवादोऽनुमत इति समुदघोषि। तदुक्तं तेन साहित्यदर्पणस्य' **तात्पर्याख्यां वृत्तिमाहु**'[२०] रित्यादिश्लोकस्य व्याख्यानावसरे

---

१७. काव्यप्रकाशः, (द्वितीयोल्लासः नागप्रकाशनम्, १९९५) पृ—१७४

१८. तदेव, (द्वितीयोल्लासः नागप्रकाशनम्, १९९५) पृ—१७४

१९. तदेव, (द्वितीयोल्लासः नागप्रकाशनम्, १९९५) पृ—१९९

२०. साहित्यदर्पणः, २/२७ (कलिकाताः, संस्कृत बुक डिपो (प्राः) लि १९७१) पृ— ९३

तत्कृतायां कुसुमप्रतिमाटीकायां– "परे प्राञ्चो नैयायिकाः पदार्थानामन्वयबोधने अभिधया लक्षणया वा उपस्थापितानामर्थानांपरस्परयथासम्भव–सम्बन्धबोधननिमित्तं तात्पर्याख्यां तात्पर्यनाम्नीं वृत्तिंशक्तिमारहुः। अतस्तदन्वयमात्रबोधिका खल्वियं तात्पर्यवृत्तिरिति भावः। अत एव प्राचीननैयायिका अभिहितान्वयवादिनः। नव्यास्तु इमामेव तात्पर्यवृत्तिं संसर्गमर्यादामाचक्षते"[२१] इत्युक्तम्।

## रामानुजताताचार्यमतपर्यालोचनम्

प्रसङ्गेऽस्मिन् विशिष्टनैयायिकाचार्याणां ताताचार्यमहाभागानां मतमुल्लेख्यं धत्ते। तन्मते वाक्यार्थबोधानुगुणा तात्पर्यशक्तिर्न कापि पृथग्वृत्तिः। तन्मते भाट्टानामपि तात्पर्यस्य वृत्तित्वमसम्मतमेव। तस्याः वृत्तित्वे अभ्युपगम्यमाने तन्मतेऽपि प्राभाकरमततुल्या गौरवदोषापत्तिः दुष्परिहरास्यात्। तदुक्तं तेन शाब्दबोधमीमांसायाम्– "वार्तिकन्यायसुधान्यायरत्नाकरयोः परिशीलने पदनिष्ठा तात्पर्याख्या वृत्तिः वाक्यार्थमवगमयतीति अवगम्यते। परं तु पदार्थाभिधानशक्त्यतिरिक्ता तात्पर्याख्यवृत्तिर्यदि स्वीक्रियते वाक्यार्थबोधानुगुणा, तदा प्राभाकरमतापेक्षया किमत्र वैशिष्ट्यम्? आनुभावकशक्तिस्थाने तात्पर्यवृत्तिस्वीकारादि"[२२] ति।

किञ्च तात्पर्योऽपि केषुचित् इत्यत्र प्रयुक्तः तात्पर्यशब्दः न खलु तात्पर्यवृत्तिपरकः, परन्तु तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यपरकः शाब्दबोधकारणीभूततात्पर्यपरको वा। तथाहि उक्तं तेन शाब्दबोधमीमांसाग्रन्थे वाक्यवाक्यार्थविचारात्मके प्रथमे भागे– "न्यायमञ्जरीं न्यायसुधां चावलम्ब्य आलङ्कारिकैः तात्पर्यार्थोऽपि केषुचित् इत्युक्तमिति प्रतीयते। मम तु प्रतिभाति। यत्केषुचित् तात्पर्यवृत्तिः इति वा, तात्पर्याख्या वृत्तिरिति वा प्रयुक्तं, तत्र सर्वत्रापि शब्दतात्पर्यमनुसृत्यैव सर्वत्र शाब्दबोधो भवति। यत्र यत्र यादृशवृत्तिस्वीकारे तात्पर्योपपत्तिर्भवति तत्र तत्र तादृशी वृत्तिः स्वीकरणीया। सा पदार्थाभिधानार्था पदशक्तिर्वा भवतु वाक्यार्थाबोधार्था लक्षणा वा भवतु इत्येवाशयः। पदार्थोपस्थिति द्वारा शाब्दबोधोपायभूतः पदनिष्टो व्यापारो वृत्तिः,

---

२१. तत्रैव

२२. शाब्दबोधमीमांसा, (नवदेहलीः, राष्ट्रीयसंस्कृतसंस्थानम्, २००५) पृ. ४६४

तात्पर्यं तु साक्षात् शाब्दबोधप्रयोजको व्यापारः, नवृत्तिरि"[२३] इति।

प्रोक्तमिदं मतमपि न युक्तिसहम्। कथमिति चेदत्रेदं वक्तव्यं यत् तन्मतपर्यालोचनेन एतदवसीयते यत् अभिहितान्वयवादमते गौरवपरिहाराय तथा अन्विताभिधानवादापेक्षया लाघवानुरोधाय तात्पर्यवृत्तिवादः कथमपि न स्वीकार्य इति तस्य तात्पर्यम्। परन्तु लाघवं वा भवतु गौरवं वा भवतु यत् ग्रन्थकारेण कण्ठरवेण उल्लिखितं तस्य ऐतिहासिकत्वं कथमपि अपह्णोतुं न शक्यमिति मे मतिः।

किञ्च न्यायमञ्जरी काव्यप्रकाशादिग्रन्थेषु अन्वयबोधकवाक्यवृत्तित्वेन निर्दिष्टं तात्पर्यमन्यत्। अपरतः शाब्दबोधसहकारिकारणेषु आकाङ्क्षादिषु मध्ये परिगणितं तात्पर्यमन्यत्। परन्तु ताताचार्यमहाभागेन अन्वयबोधकवाक्य–वृत्तिरूपं तात्पर्यं शाब्दबोधसहकारिकारणरूपतात्पर्यत्वेन परिगृहीतम्। तदेव मनसि निधाय यत्र यत्र यादृशवृत्तिस्वीकारे तात्पर्योपपत्तिर्भवति तत्र तत्र तादृशी वृत्तिः स्वीकरणीया। सा पदार्थाभिधानार्था पदशक्तिर्वा भवतु वाक्यार्थाबोधार्था लक्षणा वा भवतु इति तेनोक्तम्। परन्तु उभयोर्विविक्तविषयत्वात् तत् कथमपि समीचीनतां नावहति। एवं यत्र मुख्यार्थपरिग्रहः शक्यसम्भवस्तत्र कथमपि गौणार्थकल्पना नोचिता। शास्त्रान्तरेष्वपि समानुपूर्विकपदयोः भिन्नार्थे प्रयोग दृक्पथमेति। यथा 'कर्तुरीप्सितं कर्म'[२४] इति सूत्रस्थं कर्मपदं कर्तरि कर्मव्यतिहारे[२५] इति सूत्रीयकर्मपदात् भिन्नार्थकम्। एवमिहापि तथा स्वीकार्यम्। तेन नास्ति कश्चिद्दोषः। एवमिहापि तात्पर्यपदस्य अन्यथानयनं रम्यतां न बिभर्ति।

## उपसंहारः

परिशेषे उल्लेख्यं यन् मम्मटोक्तम् अभिहितान्वयवादपदं यौगिकं न तु रूढम्। तस्मात् तद्वादिना सदैव भाट्टानुयायिना मीमांसकेन भाव्यमित्यत्र नास्ति काचित् विनिगमना। तस्मात् आदौ पदार्था अभिधीयन्ते तदनु पदार्थनिष्ठसम्बन्धोऽभिहितो भवति इति ये आमनन्ति त एव

---

२३. शाब्दबोधमीमांसा, (नवदेहलीः, राष्ट्रीयसंस्कृतसंस्थानम्, २००५) पृ. ४६५–४६६

२४. पाणिनिसूत्रम्– १/४/४६

२५. तदेव– १/३/१४

अभिहितान्वयवादिनः। तद्दृशा नैयायिकजयन्तभट्टादीनाम् अभिहितान्वय–वादित्वं समस्ति एव। एवं भाट्टानुयायिभिः भट्टसोमेश्वरादिभिः स्थलविशेषेषु कण्ठरवेण तात्पर्यवृत्तेः सद्भावस्य अभ्युपगमात् तस्य ऐतिहासिकत्वं कथमपि न अस्वीकार्यम्। तस्मात् समूलत्वात् साधूक्तम् मम्मटेन 'तात्पर्यार्थोऽपि केषुचिदिति' निश्चप्रचं वक्तुं शक्यमिति शम्।

***

# घोषणा–पत्र

'अजस्रा' नामक समाचारपत्र के सम्बन्ध में समाचारपत्र– रजिस्ट्रीकरण (केन्द्रीय) नियमावली, १९५६ के नियम ८ (१) के अधीन प्रकाशितव्य स्वामित्व–सम्बन्धी तथा अन्य ब्योरे।

**प्रारूप चार**

**१–प्रकाशन का स्थान–** अखिल भारतीय संस्कृत–परिषद्, 'देववाणी–भवनम्,' अलीगञ्ज, लखनऊ–२२६ ०२४

**२–प्रकाशन की कालिकता–** त्रैमासिक (मकर, मेष तथा कर्क, तुला की सङ्क्रान्तियों को)

**३–मुद्रक का–** (१) नाम–श्री मनीष मेहता
(२) राष्ट्रिकता–भारतीय
(३) पता–प्नार आफसेट, १७, अशोक मार्ग, हजरतगंज लखनऊ–२२६ ०१८

**४–प्रकाशक का** (१) नाम–प्रो० प्रयाग नारायण मिश्र
(२) राष्ट्रिकता–भारतीय
(३) पता–अखिल भारतीय संस्कृत–परिषद्, 'देववाणी–भवनम्,' लखनऊ–२२६ ०२४

**५–सम्पादक का** (१) नाम–प्रो० प्रयाग नारायण मिश्र
(२) राष्ट्रिकता–भारतीय
(३) पता–अखिल भारतीय संस्कृत–परिषद्, 'देववाणी–भवनम्,' लखनऊ–२२६ ०२४

**६–स्वामी का नाम और पता–** अखिल भारतीय संस्कृत–परिषद्, 'देववाणी–भवनम्,' लखनऊ–२२६ ०२४

मैं, प्रो० प्रयाग नारायण मिश्र, एतद्द्वारा घोषित करता हूँ कि ऊपर दिये हुये ब्योरे मेरे पूर्णतम ज्ञान और विश्वास के अनुसार सत्य हैं।

(ह.) प्रो० प्रयाग नारायण मिश्र
प्रकाशक (अखिल भारतीय संस्कृत–परिषद्,
लखनऊ की ओर से)

